श्री दैवज्ञ वैद्यनाथ

# जातकपारिजातः

अथ दशापहलाध्यायः ॥ १८॥

अथ ग्रन्थोपसंहारः ।

अथ राशिशिलाध्यायः ॥ १॥

श्रीकान्ताजशिवस्वरूपममरज्योतिर्गणस्वामिनं
मायातीतमशेषजीवजगतामीशं दिनेशं रविम् ।
नत्वा गर्गपराशरादिरचिंतम् सण्गृह्य होराफलं
वक्ष्ये जातलपारिजातमखिलज्योतिर्विदां प्रीतये ॥ १॥

भारद्वाजकुलोद्भवस्य विदुषः श्रीज्यक्कटाद्रेरिह ।
ज्योतिःशास्त्रविशारदस्य तनयः श्रीवैद्यनाथा सुधीः ।
होरासारसुधारसज्ञविबुधश्रेणीमनःप्रीतये ।
राशीश्थाननिरूपणादि सकलं वक्ष्ये यथाऽनुक्रमन् ॥ २॥

प्रणम्य वन्दारुजनाभिवन्द्यपदारविन्दं रधुनायकस्य ।
सङ्गृह्य सारावलिमुख्यतन्त्रं करोम्यहं जातकपारिजातम् ॥ ३॥

अथ राशीनां संज्ञविशेषाः ।

मेषाजः विश्वकृयतुम्बुराद्या वृषाभगाताबुरुगोकुलानि ।
द्वन्द्वं नृयुग्मां जितुमं यमं च युगं तृतीयं मिथुनं वदन्ति ॥ ४॥

कुलीरकर्कटककक्र्कटाख्याः कण्ठीरवः सिंहमृगेन्द्रलेयाः ।
पात्होनकन्यारमणीतरुण्यस्तौली वणिक्जूकतुलाघटाश्च ॥ ५॥

अल्यष्टमं वृश्चिककुर्पिकीटाः धन्वी धनुश्चापशराशनानि ।
मृगो मृगास्यो मकरश्च नक्रः कुम्भो घटस्तोयघराभिधानः ॥ ६॥

मीनान्त्यमत्स्यपृथुरोमभवा वदन्ति दस्त्रादिकर्क्षनवपादयुताः क्रियाद्याः ।
चक्रस्थिता दिविचरा दिननाथसंख्याः क्षेत्रर्क्षराशिभवनानि भसंज्ञितानि ॥ ७॥

कालात्मकस्य च शिरोमुखदेशवक्षोहृत्कृक्षिभागकटिबस्तिरहस्यदेशाः ।
उरू च जानुयुगलं परतस्तु जङ्गे पादद्वयं क्रियमुखावयवाः क्रमेण ॥ ८॥

अथ मीनादीनां स्वरूपवर्णनम् ।

ज्यत्यस्तोभयपुच्छमस्तकयुतौ मीनौ सकुम्भो नर-
स्थौली चापधरस्तुरङ्गजधनो नक्रो मृगास्थो भवेत् ।
वीणाढ्यं सगदं नृयुग्ममबला नौस्था ससस्यानला
शेषाः स्वस्वगुणाभिधानसदृशाः सर्वे स्वदेशाश्रयाः ॥ ९॥

अथ मेषादीनां स्थानवर्णनम् ।

मेषस्य धातुकररत्नधरातलं स्यात् उक्ष्णस्तु सातुकृषिगोकुलकाननानि ।
द्यूतकृयारतिविहारमही युगस्य वापीतटाकपुलिनानि कुलीरराशेः ॥ १०॥

कण्ट्ःईरवस्य धनशैलगुहावनानि षष्ठस्य शाद्वलवधूरतिशिल्पभूमिः ।
सर्वार्थसारपुरपण्यमही तुलायाः कीतस्य चाश्मविधकीटबिलप्रदेशाः ॥ ११॥

चापस्य वाजिरथवारणवासभूमिः एणाननस्य सरिदम्बुवनप्रदेशाः ।
कुम्भस्य तोयघटभाण्डगृहस्थलानि मीनाधिवाससरिदम्बुधितोयराशिः ॥ १२॥

अथ मेषादीनां स्वरूपविशेषादिवर्णनम् ।

ह्रस्वा गोऽजघटाः समा मृगयुक्चापान्त्यकर्कटकाः ।
दीर्घा वृश्चिककन्यकाहरितुला मेषादिपुंयोषितौ ।
प्रागादिक्रियगोनृयुक्कटकभान्येतानि कोणान्विता-
न्याहुः क्रूरशुभौ चरस्थिरतरद्वन्द्वानि तानि क्रमात् ॥ १३॥

दीर्योपेता निशि वृषनृयुक्कर्किचापाजनक्राः
हित्वा युग्मं भवनमपरे पृष्टपूर्वोदयाश्च ।
शेषाः शीर्दीदयदिनबलाः श्रेष्ठता राशयस्ते
मीनाकारद्वयमुभयतः काललग्नं समेति ॥ १४॥

अथ मीनादीनां सलिलादिसंज्ञाविशेषाः ।

मीनालिकर्कटमृगाः सलिलाभिनास्तोयाश्रया घटवधुयुगगोपसंज्ञाः ।
निस्तोयभूतलचराः क्रियचापतौलिकण्ठीरवाश्च बहवः प्रवदन्ति सन्तः ॥ १५॥

अथ भावविशेषसम्बन्धाम्मेषादीनां चतुष्पदादिसज्ज्ञापूर्वक् बलित्वकथनम् ।

चापापरार्धहरिगोमकरादिमेषा मानस्थिता बलयुताश्च चतुष्पदाख्याः ।
कन्यानृयुग्मघटटाऊळीशारषाणड्य लग्नान्विता यदि नरा द्विपदा बलाढ्याः ॥ १६॥

मृगापरार्द्धान्त्यकुलीरसंज्ञा जलाभिधाना बलिनश्चतुर्थे ।
जलाश्रयो वृश्चिकनामधेयः स सप्तमस्थानगतो बली स्यात् ॥ १७॥

केन्द्रं गतोऽहि द्विपदो बलाढ्यः चतुष्पदाः केन्द्रगता रजन्याम् ।
कीटास्तु सर्वे यदि कण्टकस्थाः सन्धिद्वये वीर्ययुता भवन्ति ॥ १८॥

अथ राशीनां घातु-मूल जीवसज्ज्ञाः ।

घातुर्मूलं जीवमित्वाहुरार्या मेषादीनामोजयुग्मे तथैव ।
स्वर्णाद्धातुर्मृत्तिकान्तं तृणान्तं वृक्षान्मूलं जीवकूटः स जीवः ॥ १९॥

अथ मेषादीनां विप्रत्वादिनरूपणाम् ।

मीनालिवृषभा विप्राश्चापाजहरयो नृपाः ।
कुम्भयुग्मतुला वैश्याः शूद्राः स्त्रीमृगकर्कटाः ॥ २०॥

अथ मेषादीनां कालविशेषे अन्धत्वादिनिरूपणम् ।

सदा निशान्धाः क्रियगोमृगेशा मध्यन्दिने कर्कटयुग्मकन्ताः ।
पूर्वाह्नकाले बधिरौ तुलाली धन्वी मृगाख्यश्च तथाऽपराहे ॥ २१॥

मृगान्नश्चापघरश्च पङ्गू सन्धिद्वये नाशकरौ भवेताम् ।
स्याद्दक्षसन्धिः कटकालिमीनभान्तं प्रगण्ढान्तमिति प्रसिद्धम् ॥ २२॥

अथ मेषादीनां वर्णविशेषः ।

रक्तगौरशुककान्तिपाटलाः पाण्डुइत्ररुचिनीलकाङ्चनाः ।
पिङ्गलः शबलबभ्रुपाण्डुरास्तुम्बुरादिभवनेषु कलिताः ॥ २३॥

अथ मेषादीनां बलाबलफलम् ।

वस्त्राद्यं शालिमुख्यं, वनफलनिचयः, कन्दली मुख्यधान्यम्,
स्वक्सारं, मुद्गपूर्वं, तिलवसनमुखं, त्विक्षुलोहादिकं च ।
शस्त्रावं, काङ्चनाद्यं जलजनिकुसुमं, तोयजातं समस्तम्,
द्रव्याण्याहुः क्रियादिष्वबलयुतेष्वल्पताधिक्यभाङ्जि ॥ २४॥

अथ राशिस्वामिनिरूपणम् ।

धराजशुक्रज्ञशशिनसौम्यसितारजीवार्कजमन्दजीवाः ।
क्रमेण मेषादिषु राशिनाथस्तदंशपाश्चेति वदन्ति सन्तः ॥ २५॥

अथ सूर्यादीनां त्रिकोणराश्यादिवर्णनम् ।

मूलत्रिकोणा हरिताबुरुक्रिया वधूधनुस्तौलिघटा दिवाकरत् ।
सितासिताकर्कङ्गिरसां नखांशकास्त्रिकोणमादौ परतः स्वमन्दिरम् ॥ २६॥

वृषादिभागत्रयमुच्चमिन्दोर्मूलत्रिकोणं परतस्तु सर्वम् ।
मेषादिगा द्वादशभागसंज्ञाः कुजस्य कोणं परतः स्वभं स्यात् ॥ २७॥

कन्यार्द्धमुच्चं, शशिजस्य लोणं दशांशकाः स्वर्क्षफलं शरांशाः ।
कुम्भस्त्रिकोणं, फणिनायकस्य तुङ्गं नृयुग्मं, रमणी गृहं स्यात् ॥ २८॥

अथ सूर्यादीनामुच्चनीचराशिनिरूपणपूर्वकमत्युच्चनोचभागनिरूपणम् ।

मेषो वृषो मकरषष्ठकुलीरमीनाः तौली च तुङ्गभवनानि तदस्तनीचाः ।
नित्याङ्गनाहरिमणामनुसारनीरसण्ख्या दिवाकरसुखादतितुङ्गभागाः ॥ २९॥

अथ दशवर्गीनिरूपणं तस्वामिनिरूपणङ्च ।

लग्नं होरा दृकाणं स्वरनवदशकद्वादशांशा कलांशाः
त्रिंशत्षष्ट्यंशकाख्या व्ययदुरितचयश्रिकरा मानवानाम् ।
होरा राश्यर्धमोजे इनकरशशिनोरिन्दुमार्तण्ढोरे (2)
युग्मे राशौ, दृगाणा निजतनयतपःस्थानपानां भवन्ति ॥ ३०॥ (3)

लग्नादिसप्तमांशेशास्त्वोजे राशौ यथाक्रमम् ।
युग्मे लग्ने स्वरांशानामधिपाः सप्तमादयः ॥ ३१॥ (4)

चापाजसिंहराशीनां नवांशास्तुम्बुरादयः ।
वृषक्नयामृगाणां च मृगाद्या नव कीर्तिताः ॥ ३२॥

नृयुक्तुलाघटानां च तुलाद्याश्चांशका नव ।
कर्किवृश्चिकमीनानां कर्कटाद्या नवांशकाः ॥ ३३॥

चरे चाद्यंशको ज्ञेयः, स्थिरे मध्यनवांशकः ।
अन्त्यांशको द्विस्वभावे वर्गोत्तम इति स्मृतः ॥ ३४॥ (5)

लग्नादिदशमांशेशात्वोजे, युग्मे शुभादिकाः (6)
द्वादशांशाधिपतयस्तत्तद्रासिवशानुगाः ॥ ३५॥ (7)

ओजे कलांशप्रभुखास्तदीशा विरङ्चिशौरीशदिवाकराश्च ।
युग्मे विलग्ने सति भास्कराद्या विलोमतः षोडशभागनाथाः ॥ ३६॥ (8)

अथ दयवर्गजाताः संज्ञावियेषाः ।

मूलत्रिकोणस्वगृहोच्चभागवर्गोत्तमानां दयवर्गजानम् ।
संबोगजातोत्तमनामपूर्वा वैशेषिकांशा इति ते वदन्ति ॥ ४४॥

उत्तमं तु त्रिवर्गैक्यं चातुर्वर्गन्तु गोपुरम् ।
वर्गपङ्चकसंयोगं सिंहासनमिहोच्यते ॥ ४५॥

वर्गह्वयं पारिजातं षड्णां पारावतांशकः ।
सप्तमं देवलोकः स्यादष्टमं च तथा भवेत् ॥ ४६॥

ऐरवतम् तु नवकं फलं तेषां पृथक् पृथक् ॥ १/२॥

अथषद्वर्गाः सप्तवर्गश्चा ।

विलग्नहोराद्रेष्काणनवांशद्वादशांशकाः ॥ ४७॥

त्रिंशांशकश्च षड्वर्गः शुभकर्मसु शस्यते ।
सप्तांशयुक्तः षड्वर्गः सप्तवर्गोऽभिधीयते ॥ ४८॥

जातकेषु च सर्वेषु ग्रहाणां बलकारणम् ॥ १/२॥

अथ भावानां नामानि ।

कल्पोदयाद्यतनुजन्मविलग्नहोरा वागर्थभुक्तिन्यनस्वकुटुम्बभानि ।
दुश्चिक्यविक्रमसहोदरवीर्यधैर्यकर्णास्तृतीयभवनस्य भवन्ति संज्ञाः ॥ ४९॥

पातालवृद्धिहिबुकक्षितिमातृविद्यायानाम्बुगेहसुखबन्धुचतुष्टयानि ।
धीदेवराजपितृनन्दनपङ्चकानि रोगांगशस्त्रभयषष्ठारिपुक्षतानि ॥ ५०॥

जामित्रकामगमनानि कलत्रसम्पद्द्यूनास्तसप्तमगृहाणि वदन्ति चार्याः ।
रन्ध्रायुरष्टणमृत्युविनाशनानि धर्मो गुरुः शुभतपोनवभाग्यमानि ॥ ५१॥

व्यापारमेषूर्णमध्यमानं ज्ञानं च राजास्पदकर्मसंज्ञाः ।
एकादशोपान्त्यभवायलाभा रिःफव्ययद्वादशकान्त्यभाति ॥ ५२॥

अथ भावानां केन्द्रादिसंज्ञाः ।
मेषूरणोदयकलत्ररसातलानि स्युः केन्द्रकण्टकचतुष्टयसंज्ञितानि ।
लग्नात्रिकोणभवनं च स्यादित्रिकोणमुदयान्नव्मं वदन्ति ॥ ५३॥

तनुसुखमदनाज्ञा राशयः केन्द्रसंज्ञाउ पणफरभवनानि स्वायपुत्राष्टमानि ।
व्ययरिपुगुरुदुश्चिक्यानि चापोक्लिमानि प्रभ्वति चतुरस्रं मृत्युबन्धुद्वयं च ॥ ५४॥

दुश्चिक्यायारिमानान्युपचयभवनान्याहुराहुराचार्यमुख्याः
शेषाः पीडर्क्षसंज्ञा नवधनजलधीकामरन्ध्रान्त्यहोराः ।
एते भावास्तदीशेन्दुजसितगुरुभिः संयुता वीक्षिता वा
नान्यैर्युक्ता न दृष्टा यदि शुभफलदा जन्मतः पृच्छतो वा ॥ ५५॥

अथ राशीनामुदयमानानि ।

नखा जिना विंशतिरष्टयुक्ता रदाङ्गलोका वियदर्णवाख्याः ।
मेषादिभानं क्रमशो वदन्ति तुलादिषत्कस्य विलोमतस्ते ॥ ५६॥

अथ राशीनां शुभाशुभभागाः ।

तनुः शरा रारिखराः किरीटिनो धना गुरुर्हेयनखा नरा नुकाः ।
शशाङ्कभागा यदि तुम्बुरादिके मुहूर्तजन्मादिषु मृत्युसूचकाः ॥ ५७॥

पुत्रो वतुर्दिव्यजनाधिको धनी विराटयो गोत्रवयो धिको धुनाः ।
मेषादिके पुष्करभागसंज्ञका मुहुर्तजन्मादिषु शोभनप्रदाः ॥ ५८॥

अथ मेषादिराशीनां वासदेशाः ।

क्रमात्पाटलकर्नातचरचोलवसुन्ध्राः ।
पाण्ड्यकेरलकोल्लासमलयावनिसैन्धवाः ॥ ५९॥

उदक्पङ्चालयवनकोशलक्षितिसंज्ञकाः ।
मेषादिसर्वराशीनां वासदेशाः प्रकीर्तिताः ॥ ६०॥

अथ राशीनां ष्लवस्वनिरूपणम् ।

स्वाम्याशाख्यं यत्तदापप्लवस्वं भानुक्रान्तादम्बुसंज्ञोऽभिजित्स्यात् ।
होरातन्त्रे पारिजाताभिधाने संज्ञाध्यायः कीर्तितो राशिशीलः ॥ ६१॥

इति श्रीनवग्रहकृपया वैद्याथविरचिते जातकपारिजाते
राशिशीलाध्यायः प्रथमः ॥ १॥

अथ ग्रहनामस्वरूपगुणभेदाध्शाशः ॥ २॥

तत्रादौ सूर्यादीनां कालात्मत्वादिनिरूपणम् ।

कालस्यात्मा भास्कतश्चित्तमिन्दुः सत्वं भौमः स्याद्वचश्चन्द्रसूनुः ।
देवाचार्यः सौख्यविज्ञानसारः कामः शुक्रे दुखभेवार्कसूनुः ॥ १॥

अथ व्र्यादीनां राजत्वादिनिरूपणं

दिनेशचन्द्रौ राजानौ सचिवौ जीवभार्गवौ ।
कुमारे वित् कुजो नेता प्रेष्यस्तपननन्दनः ॥ २॥

अथ सूर्यदीनां नामान्तराणि ।

द्वेलिः सूर्यस्तपनदिनकृद्भानुपूषारुणार्काः
सोमः शीतद्युतिरुडुपतिग्लैर्मृगाङ्केन्दुचन्द्राः ।
आरो वक्रक्षितिजरुधिराङ्गारक्क्रूरनेत्राः
सौम्यस्तारातनयबुधविद्बोधनाश्चेन्दुपुत्रः ॥ ३॥

मन्त्री वाचस्पतिगुरुसुराचार्यदेवेज्यजीवाः
शुक्रः काव्यः सितभृगुसुताच्छास्फुजिद्दानवेज्याः ।
छायासूनुस्तरणितनयः कोणशन्यर्किमन्दाः
राहुः सर्पासुरफणितमः सैहिकेयागवश्च ॥ ४॥

ध्वजः शिखी केतुरिति प्रसिद्धा वदन्ति तज्ज्ञा गुलिकश्च मान्दिः ॥ ४ १/२॥

अथरव्यादीनामुपग्रहाः ।

उप्रग्रहा भानुसुखग्रांशाः कालादयः कष्टफलप्रदाः सुय्ः ॥ ५॥

क्रमशः कालपरिधिधूमार्द्धप्रहराह्वयाः ।
यमकण्टककोदण्डमान्दिपातोपकेतवः ॥ ६॥

अथ रव्यदीनां स्वरूपम् ।

भानुः शामललोहितद्युतितनुश्चन्द्रः सिताङ्गो युवा
दूर्वाश्यमलकान्तिरिन्दुतनयः, संरक्तगौरः कुजः ।
मन्त्री गौरकलेवरः:, केतुर्विचित्रद्युति ॥ ७॥

अथ ग्रहाणां शुभाशुभत्वानिरूपणम् ।

प्रकाशकौ शीतकरप्रभाकरौ, ताराग्रहाः पङ्च धरासुतादयः ।
तमः स्वरूपौ शिखिसिंहिकासुतौ, शुभाः शशिज्ञामरवन्द्यभार्गवाः ॥ ८॥

क्षीणेन्दुमन्दरविराद्दुशिखिक्षमाजाः पापास्तु पापयुतचन्द्रसुतश्च पापः ।
तेयामतीच शुभदौ गुरुदानवेज्यौ, क्रूरौ दिवाकरसुतक्षितिजौ भवेताम् ॥ ९॥

शुक्लादिरात्रिदशकेऽहनि मध्यवीर्यशाली द्वितीयदशकेऽतिशुभप्रदोऽसौ ।
चन्द्रस्तृटीयदशके बलवर्जितस्तु सौम्येक्षणादिसहितो यदि शोभनः स्यात् ॥ १०॥

अथ रव्यादिनामुदयप्रकारः ।

रव्याररहुमन्दाश्च पृष्टेनोद्यन्ति सर्वदा ।
शरिसा शुक्रचन्द्रज्ञा जीवस्तूभयतो व्रजेत् ॥ ११॥

अथ रव्यादीनामाकारविशेषाः ।

दिवाकरज्ञौ विहगस्वरूपौ सरीसृपाकारयुतः शशाङ्कः ।
पुरन्दरार्चायसितौ द्विपादौ चतुष्पदौ भानुसुतक्षमाजौ ॥ १२॥

अथ रव्यादीनां सङ्चारदेशाः ।

जलाशयु चन्द्रसुरारिवन्द्यौ बुधालयग्नामचरौ गुरुज्ञौ ।
कुजाहिमन्दध्वजवासरेशा भवन्ति शैलाटविसङ्चरन्तः ॥ १३॥

अथ रव्यादीनां बाल्यादिवयोनिरूपणम् ।

बालो धराजः कुमारकस्त्रिंशद्गुरुः षोडशवत्सरः सितः ।
पञ्चाशदर्को विधुरब्दसप्ततिः शताब्दसङ्ख्याः शनिराहुकेतवः ॥ १४॥

अथ ग्रहाणां शास्त्राधिपत्यनिरूपणं धातुमूलासिसंज्ञाश्च ।

शाखाधिपा जीवसितारबोधना धानुस्वरूपद्युचरौ कुजारुणौ ।
मूलप्रधानौ तुहिनाकरार्कजौ जीवौ सितार्थौ तु विमिश्र इन्दुजः ॥ १५॥

अथ ग्रहाणामवस्थेयत्ता ।

दीप्तः प्रमुदितः स्वस्थः शान्तः शक्तः प्रपीडितः ।
दीनः खलस्तु विकलो भीतोऽवस्था दश क्रमात् ॥ १६॥

अथ स्थानविशेषादवस्थाविशेषाः ।

स्वोच्चत्रिकोणोपगतः प्रदीप्तः स्वस्थः स्वहेगे मुदितः सुहृद्भे ।
शान्तस्तु सौम्यग्रहवर्गयातः शक्तोऽतिशुद्धः स्फुटरश्मिजालैः ॥ १७॥

ग्रहाभिभूतस्त्वतिपीडितः स्यादरातिराश्यंशगतोऽतिदीनः ।
खलस्तु पापग्रहवर्गयोगान्नी वेऽतिभीतो विकलोऽस्तयातः ॥ १८॥

अथ ग्रहणां वर्णविशेषाः ।

वर्णास्ताम्रसितारक्तहरितापीतकर्बुराः ।
कृष्णकान्तिरिनादीणां नष्टादौ च प्रकीर्तिताः ॥ १९॥

अथ रव्यादीनां द्रव्याणि अधिदेवताश्च ।

द्रव्याणि ताम्रमणिकाञ्चनशुक्तिरौष्यमुक्तान्ययश्च दिननाथमुखग्रहाणाम् ।
वह्निअम्बुषण्मुखहरीन्द्रशचीविरञ्चिमुख्या दिवाकरमुखादधिदेवताः स्युः ॥ २०॥

अथ रव्यादीनां रत्नानि ।

माणिक्यं दिननायकस्य, विमलं मुक्ताफलं शीतगोः
माहेयस्य च विद्रुमं मरकटं सौम्यस्य गारुत्मकम् ।
देवेज्यस्य च पुष्परागमसुराचार्यस्य गारुत्मकम्
नीलं निर्मलमन्ययोश्च गदिते गोमेदवैडूर्यके ॥ २१॥

अथ ग्रहाणां वस्त्रादिनिरूपणम् ।

स्यूलाम्बरं नूतनचारुचेलं कृशानुतोयाहतम्ध्यमानि ।
दृढांशुकं जीर्णमिनादिकानां वस्त्राणि सर्वे मुनयो वदन्ति ॥ २२॥

प्रागादिका भानुसिताररराहुमन्देन्दुविद्देवपुगोहिताः स्युः ।
शुक्रारचन्द्रज्ञौरेज्यमन्दा वसन्तमुख्यर्त्वधिपा दृगाणैः ॥ २३॥

देवतोयतटवह्निविहाराः कोशगेदृशयनोत्करदेशाः ।
भानुपूर्वनिलयाः परिकल्प्या वेश्मकोणनिलयावहिकेनू ॥ २४॥

अथ पर्देशविभाग इनाहीनाम् ।

लङ्कादीकृष्णासरिदन्तमारः सितस्ततो गौतभिकान्तभूमिः ।
विन्ध्यान्तमार्यः सुरनिग्नगान्तं बुधः शनिः स्यात्तुहिनाचकान्तः ॥ २५॥

अथ ग्रहाणां जातयो गुणाश्च ।

विप्रौ जीबसितौ दिनेशरुधिरौ भूपालकौ वैश्यराड्
इन्दुः शूद्रकुलाधिपः शशिसुतो मन्दोऽवराणां पतिः ।
आदित्यामरमन्त्रिशीतकिरणाः सत्त्वप्रधानग्रहाः
शुक्रज्ञौ सरजोगुणौ शनिधरापुत्रौ तमःस्वामिनौ ॥ २६॥

अथ ग्रहाणां नरादिसंज्ञा महाभूताधिपत्यश्च ।

नराकारा भानुक्षितिजगुरवः शुक्रशशिनौ
वधूरूपौ षण्ढप्रकृतिपुरुषौ मन्दशशिजौ ।
वियत्क्षोणीतेजपवनपयसामेव पतयः
सुराचार्यज्ञारधुमणिसुतदेवारिसचिवाः ॥ २७॥

अथ ग्रहाणां कक्षाक्रम ।

कक्षायां क्रमओ दिनेशतयाज्ज्योतिर्भचक्राश्रिताः
छायासुनुगुरुक्षमाजदिनकृच्छुकेन्दुपुत्रेन्दवः ॥ २७ १/२॥

अथ सुर्यादीनां धतुविशेषादि ।

भज्जास्नायुवसाऽस्थिशुक्ररुधिरत्वग्धातुनाथा क्रमाद् ।

आरार्किज्यदिनेशशुक्रशशभृत्तारासुताः कीर्तिताः ॥ २८॥

लवणकटुकपायस्वादुतिक्ताम्लमिश्राः शशिरविशनिजीवारासुरेज्यज्ञनाथाः ।
अयनदिवसपक्षर्त्वब्दमासक्षणेशा रविकुजसितसौम्या मन्दजीवेन्दवश्च ॥ २९॥

अथ रव्यादीनां स्थानविशेषे दृष्टयः ॥

पादेक्षणं भवति सोदरमानराश्योरर्धं त्रिकोणयुगलेऽखिलखेचराणाम् ।
पादोनदृष्तिनचयश्चतुरस्त्रयुग्मे सम्पूर्णदृग्बलम्नङ्गगृहे वदन्ति ॥ ३०॥

अथ रव्यादीनां दृष्टिविशेषे बलित्वम् ।

शनिरतिबलशाली पाददृग्वीर्ययोगे सुरकुलपतिमन्त्री कोणदृष्टौ सुभः स्यात् ।
त्रितयचरणदृष्टया भूकुमारः समर्थः सकलगगनवासाः सप्तमे दृग्बलाढ्याः ॥ ३१॥

अथ ग्रहाणामृध्वार्दिदृष्टयः ।

अथोर्वदृष्टी दिननाथभौमौ दृष्टिः कटाक्षेण कवीन्दुसून्वोः ।
शशाङ्कगुर्वोः गमभागदृष्टिरधोऽक्षिपानस्त्यदिनाथशन्योः ॥ ३२॥

अथ ग्रहाणां स्थानबलम् ।

स्वोच्चत्रिकोणस्वसुहृद्दृगाणराश्यंशवैशेषिकवर्गवन्तः ।
आरोहवीर्याधिकविन्दुकास्ते खेचारिणः स्थानबलाधिकाः स्युः ॥ ३३॥

नीचारिपापस्वगयोगनिरीक्ष्यमाणास्तद्वर्गसन्धिलघुबिन्दुदुरंशकाश्च ।
आदित्यरश्मिपरिभूतपराजितास्ते दृष्टयादिशक्त्यसहिताश्च न शोभनाः स्युः ॥ ३४॥

अथ ग्रहाणां दिग्बलम् ।

विलग्नपातालबधूनभोगा बुधामरेज्यौ भृगुसूनुचन्द्रौ ।
मन्दो धरासूनुदिवाकरौ चेत् क्रमेण ते दिग्बलशालिनः स्युः ॥ ३५॥

अथ कालबलम् ।

निशीन्दुमन्दावनिजाः परेऽहनि स्वकीयहोरासममासवासराः ।
सितादिपक्षद्वयगाः शुभाशुभा बुधः सदा कालजवीर्यशालिनः ॥ ३६॥

अथ चेष्टाबलम् ।

जैत्रा व्क्रसमागमोपगसितज्ञारामरेज्यासिताः,
दिव्याशायनगेन्दुतिग्मकिरणौ चेष्टाबलांशाधिकाः ॥ ३६ १/२॥

अथ ग्रहानां निसर्गबलम् ।

सौम्यक्षेपयुता महीसुतभुस्वा(खा)श्चेष्टाबलाढ्याः क्रमान्
नैसर्गस्य बलाधिकाः शनिकुजज्ञाचार्यशुक्रेन्द्वनाः ॥ ३७॥

क्रमेण दृक्स्थाननिसर्गचेष्टादिक्कालवीर्याणि च षड्बलानि ।
सुधाकरेष्विन्दुशरेन्दुशैलभेदानि तानि प्रवदन्ति सन्तः ॥ ३८॥

स्वरूपषष्ट्यंशविषष्टिकांशा मृगादिवीर्योपगषड्बलाढ्याः ।
क्रमेण तद्योगभवं बलं हि पूर्णं त्रिपदं दलं वा ॥ ३९॥

अथ बलप्रमाणम् ।

अर्धाधिकं षट्कमिनस्य सूरेः शुक्रस्य पञ्चाधिकमर्धरूपम् ।
सप्तेन्दुपुत्रस्य बलं षडिन्दोः सौरारयोः सायकरूपसंख्या ॥ ४०॥

अथ ग्रहाणां तात्कालिक-मैत्रीविनारः ।

अन्योन्यतः सोदरलाभमानपातालवित्तव्ययराशिसंस्थाः ।
तत्कालमित्राणि स्वगा भवन्ति तदन्ययाता यदि शत्रवस्ते ॥ ४१॥

अथ सूर्यादीनां नैसर्गिकाः शत्रुमित्रोदासीनाः ।

मित्राणि भानोः कुजचन्द्रजीवाः शत्रू सितार्की शशिजः समानः ।
चन्द्रस्य मित्रे दिननायकज्ञे समा गुरुक्ष्माजसितासिताः स्युः ॥ ४२॥

आरस्य मित्राणि रवीन्दुजीवाश्चान्द्री रिपुः शुक्रशनी समानौ ।
सूर्यासुरेज्यौ बुधस्य समाः शनीज्यावनिजास्त्वरीण्दुः ॥ ४३॥

सूर्यारचन्द्राः सुहृदस्तु सूरेः शत्रू सितज्ञौ रविजः समानः ।
मित्रे शनिज्ञौ भृगुन्दनस्येन्द्वनावरी जीवकुजौ समानौ ॥ ४४॥

मन्दस्य सूर्येन्दुकुजाश्च शत्रवः समः सुरेज्यः सुहृदौ सितेन्दुजौ ॥ १/२॥

LOST PAGE
LOST PAGE
LOST PAGE

अथ सूर्यादिभ्यः फलविशेषचिन्ता ।

सूर्यादात्मपितृप्रभावनिरुजाशक्तिश्रियश्चिन्तयेत्
चेतोबुद्धिनृपप्रसादजननीसम्पत्करश्चन्द्रमाः ।
सत्त्वं रोगगुणानुजावनिसुतज्ञातीर्धरासूनुना
विद्याबन्धुविवेकमातुलसुहृत्त्वक्कर्मकृद्बोधनः ॥ ४९॥

प्रज्ञानित्यशरीरपुष्टितनयज्ञानानि वागीश्वरात्
पत्नीवाहनभूषणनि मदनव्यआपारसौम्ख्यं भृगोः ।
आयुर्जीवनमृत्युकारणविपत्सम्पत्प्रदाता शनिः
सर्पेणैव पितामहं तु शिखिना मातामहं चिन्तयेत् ॥ ५०॥

अथ ग्रहाणां भावकारकत्वम् ।

द्युमणिरमरमन्त्री भूसुतः सोमसौम्यौ गुरुरिनतनयारौ भार्गवो भानुपुत्रः ।
दिनकरदिविजेज्यौ जीवभानुज्ञमन्दाः सुरगुरुरिनसूनुः कारकाः स्युर्विलग्नात् ॥ ५१॥

अथ ग्रहाणां स्थाननविशेषे शुभाशुभप्रदता ।

कामावनीनन्दनराशियाताः सितेन्दुपुत्रामरवन्द्यमानाः ।
अरिष्टदास्तेऽखिलजातकेषु सदाऽष्टमस्थः शनिरिष्टदः स्यात् ॥ ५२॥

अथ सूर्यादीनां स्वरूपाणि ।

प्रतापशाली चतुरस्रदेहः श्यामारुणाङ्गो मधुपिङ्गलाक्षः ।
पित्तात्मकः स्वल्पकचाभिरामो देवाकरः सत्त्वगुणप्रधानः ॥ ५३॥

सङ्जारशीलो मृदुवाग्विवेकी शुभेक्षणश्चारुतरस्थिराङ्गः ।
सदैव धीमांस्थनुवृत्तकायः कफानिलात्मा च सुधाकरः स्यात् ॥ ५४॥

क्रूरेक्षणस्तरूणमूर्तिरुदारशीलः पित्तात्मकः सुचपलः कृशमध्यदेशः ।
संरक्तगौररुचिरावयवः प्रतापी कामी तमोगुणरतस्तु धराकुमारः ॥ ५५॥

दूर्वादलद्युतितनुः स्फुटवाक् कृशाङ्गः स्वामी रजोगुणवतामतिहास्यलोलः ।
हानिप्रियो विपुलपित्तकफानिलात्मा सद्यः प्रतापविभवः शशिजश्च विद्वान् ॥ ५६॥

बृहदुदरशरीरः पीतवर्णः कफात्मा सकलगुणसमेतः सर्वशास्त्राधिकारी ।
कपिलरुचिकचाक्षः सात्त्विकोऽतिव धीमान् अलधुनृपतिचिह्नः श्रीधरो देवमन्त्री ॥ ५७॥

असितकुटिलकेशः श्यामसौन्दर्यशाली समततरुचिराङ्गः सौम्यदृक् कामशीलः ।
अतिपवनकफात्मा राजसः श्रीनिधानः सुखबलसुगुणानामाकरश्चासुरेज्यः ॥ ५८॥

काठीन्यरोमावयवः कृशात्मा दूर्वासिताङ्गः कफमारुतात्मा ।
पीनद्विजश्चारुपिशङ्गदृष्टिः सौरिस्तमो बुद्धिरतोऽलसः स्यात् ॥ ५९॥

इतरयोगे ग्रहाणां वृद्धिमत्ता ।

अर्केण मन्दः, शनिना महिसुतः, कुजेन जीवो गुरुणा निशाकरः ।
सोमेन शुक्रोऽसुरमन्त्रिणा बुधो बुधेन चन्द्रः खलु वर्द्धते सदा ॥ ६०॥

अथ ग्रहाणां स्थानबलविशेषः ।

स्वोच्चस्वकीयभवनस्वदृगाणद्दोरावारांशकोदगयनेषु दिन्स्य मध्ये ।
राशिप्रवेशसमये सुहृदंशकादौ मेषूरणे दिनमणिर्बलवानजस्रम् ॥ ६१॥

चन्द्रः कर्किणि गोपतौ निजदिनद्रेक्काणहोरांशके
राश्यन्ते शुभवीक्षणे निशि सुखे याम्यायने वीर्यवान् ।
इन्दुः सर्वकलाधरो यदि बली सर्वत्र सन्धि विना
सर्वव्योमचरेक्षितस्तु कुरुते भूपालयोगं नृणाम् ॥ ६२॥

आरः स्ववारनवभागदृगाणवर्गे मीनालिकन्भमृगसुन्बुरुयामिनीषु ।
वक्रे च याम्यदिशे राशिमुखे बलाढ्यो मीने कुलिरभवने च ददाति ॥ ६३॥

अन्यानृयुग्मभवने निजवारवर्गे चापे विना रविमहर्निशमिन्दुसूनुः ।
सौम्यायने च बलवानपि राशिमध्ये लग्ने सदा यदि यशोबलवृद्धिदः स्यात् ॥ ६४॥

मीनालिचापकटके निजवर्गवारे मध्यन्दिनोदगयने यदि राशिमध्ये ।
कुम्भे च नीचभवनेऽपि बली सुरेज्यो लग्ने सुखे च दशमे बहुवित्तदः स्यात् ॥ ६५॥

स्वोच्चस्ववर्गदिवसे यदि राशिमध्ये शत्रुव्ययानुजगृहे हिबुकेऽपराह्ण ।
युद्धे च शीतकरसङ्गमवक्रचारे शुकोऽरुणस्य पुरतो यदि शोभनः स्यात् ॥ ६६॥

मन्दस्तुलामकरकुम्भगृहे कलत्रे याम्यायने निजदृगाणदिने दशायाम् ।
अन्ते गृहस्य समरे कृष्णपक्षे वक्रः समस्तभवनेषु बलाधिकः स्यात् ॥ ६७॥

मेषालिकुम्भतरुणिवृषकर्कटेषु मेषूरणे च बलवानुरगाधिपः यात् ।
कन्यावसानवृषचापधरे निशायामुत्पातकेतुजनने च शिखी बली स्यात् ॥ ६८॥

प्रोक्तप्रकारप्रबलान्विता ये मूलं विबला भवन्ति ।
भावेषु योगेषु दशाकलषु न सम्यगुक्तानि फलानि सन्ति ॥ ६९॥

अथ ग्रहाणामधिमुखत्वादि ।

अधोमुखा दिनेशस्य पूर्वषट्कस्थिता ग्रहाः ।
अपरार्द्धस्थिताः भानोरूर्ध्वास्याः सुखवित्तदाः ॥ ७०॥

भानामवस्थानगताः क्रमेण मदार्यभौमार्किसितज्ञचन्द्राः ।
तेषामधःस्थानगतो बलीयान् राहुर्भहीमण्डलमूर्धि संस्थः ॥ ७१॥

स्थानविशेषे स्थितिक्रमविशेषे च ग्रहाणां विफलता ।
सभानुरिन्धुः शशिजश्चतुर्थे गुरुः सुते भूमिसुतः कुतुम्बे ।
भृगुः सपत्ने रविजः कलत्रे विलग्नतस्ते विफला भवन्ति ॥ ७२॥

अथ दोषापहरणम् ।

राहुदोषम्बुधो हन्यादुभयोस्तु शनैश्चरः ।
त्रयाणां भूमिजो हन्ति चतुर्णां दानवार्चितः ॥ ७३॥

पङ्चानां देवमन्त्री च षण्णां दोषं तु चन्द्रमाः ।
सप्तदोषं रविर्हन्याद्विशेषादुत्तरायणे ॥ ७४॥

अथ ग्रहाणां पीडाकरणप्रकारः ।

सदाऽग्निरोगज्वरवृद्धिदीपनक्षयातिसागदिकरोगसङ्कुलम् ।
नृपालदेवावनिदेवकिङ्करैः करोति चित्तव्यसनं देवाकरः ॥ ७५॥

पाण्डुदोषजलदोषकामलापीनसादिरमणीकृतामयैः ।
कालिकासुरसुवासिनीगणैराकुलं च कुरुते तु चन्द्रमाः ॥ ७६॥

पीनबीजकफशास्त्रपावकग्रन्थिरुग्व्रणदरिद्रजामयैः ।
वीरशैवगणभैरवादिभिर्भीतिमाशु कुरुते धरासुतः ॥ ७७॥

गुह्योदरादृश्यसमीरकुष्ठमन्दाग्निशूलग्रहणीरुगाद्यैः ।
बुधादिविष्णुप्रियदासभूतैरतीव दुःखं शशिजः करोति ॥ ७८॥

आचार्यदेवगुरुभूसुरशापदोषैः शोकं च गुल्मरुजमिन्द्रगुरुः करोति ।
अन्ताविकारजनिमेहरुजा सुराद्यैः स्वेष्टाङ्गनाजनकृतैर्भयमासुरेज्यः ॥ ७९॥

दारिद्यदोषनिजकर्मपिशाचचौरैः क्लेशं करोति रविजः सह सन्धिरोगैः ।
कण्डूमसूरिरोपुकृत्रिमकर्मरोगैः स्वाचारहीनलघुजातिगणैश्च केतुः ॥ ८०॥

करोत्यपस्मारमसूरिरज्जूक्षुद्दृक्कृमिप्रेतपिशाचभूतैः ।
उद्बन्धनेनारुचिकुष्ठरोगैर्विधुन्तुदश्चातिभयं नराणाम् ॥ ४१॥

अथ राशौ ग्रहफलपरिपाककालः ।

आद्यन्तमध्यभवनोपगता नभोगाश्चादित्यभूमितनयौ शनिशीतरश्मी ।
जीवासुरेन्द्रसचिवौ फलदाःक्रमेण तारासुतः सकलकालफलप्रदः स्यात् ॥ ४२॥

अथ धातुजरोगे धातुनाथोपासना ।

यद्धातुकोपजनिताखिलरोगशान्त्यै तन्नाथमाशु उपतर्पणहोमदानैः ।
सम्पूज्य रोगभयशोकविमुक्तचित्ताः सर्वे नराः सुखयशोबलशालिनः स्युः ॥ ४३॥

अथ ग्रहाणां बाल्याद्यवस्थानिरूपणम् ।

बालः कुमारोऽथ युवा च वृद्धो मृतश्च राशावयुजि क्रमेण ।
त्रिंशल्जवैर्ष्यत्ययतः समे स्युरेकैकशोऽशाः पुनरेव कार्याः ॥ ८४॥

अथ जाग्रदाद्यावस्थाः ।

उच्चांशे स्वनवांशे च जागरूकं वदन्ति हि ।
सुहृन्नवांशकं स्वप्नं सुप्तं नाचारिभांशकम् ॥ ८५॥

अथ ग्रहाणां फलदानकालः ।

शीर्षोदयगतः खेटः पाकादौ फलदो भवेत् ।

पृष्ठोदयस्थः पाकान्ते सदा चोभयराशिगः ॥ ८६॥

समस्तहोराफलसारसान्द्रविराजिते जातकपारिजाते ।
ग्रहक्रियारूपगुणप्रभेदः सङ्कीर्र्तितः खेटकृपाकटाक्षात् ॥ ८७॥

इति नवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते
ग्रहनामस्वरूपगुणमेदाध्यायः ॥ २॥

अथ वियोनिजन्माद्यध्यायः ॥ ३॥

क्रूरग्रहैः सुबलिभिर्विबलैश्च सौम्यैः चतुष्टयगतेत दवेक्षणाद्वा ।
चन्द्रोपगद्विरसमागसमानरूपं सत्त्वं वदेद्यादि भवेत्स वियोनिसंज्ञः ॥ १॥

पापा बलिनः स्वभागगाः पारक्ये विबलाश्च शोभनाः ।
लग्नं च वियोनिसंज्ञकं दृष्टाऽत्रापि वियोनिमादिशेत् ॥ २॥

क्रियः शिरो वक्त्रगलो वृषोऽन्ये पादांसकं पृष्ठोमुरोऽथ पार्श्वे ।
कुक्षिस्त्वपानोऽघ्न्यथ मेढ्रभुष्कौ स्फिक्पुच्छमित्याह चतुष्पदाङ्गे ॥ ३॥

लग्नांशकाद्ग्रहयोगेक्षणाद्वा वर्णान् वदेद्बलयुक्ताद् वियोनौ ।
दृष्टया समानान् प्रवदेत्तु संख्यां रेखां वदेत्स्मरसंस्थैश्च पृष्ठे ॥ ४॥

देहाम्बुगौ सुखाङ्गेशौ वतुष्पाज्जननं भवेत् ।
देहेशे सुखपे वाऽहिकेतुयुक्ते पशोर्जनिः ॥ ५॥

अथ ग्रहविशेषक्षणादिना पशुविशेषजनिः ।

श्क्रेक्षिते गोजननं महिष्यार्कियुतेक्षिते ।
राहुकेतुयुक्ते मेषः पापाढ्येऽन्यपशोजनिः ॥ ६॥

अथ स्थलाम्बुजनियोगकरी ग्रहस्थितिः ।

खगे दृकणे बलसंयुतेन वा ग्रहेण युक्ते चरभांशकोदये ।
बुधांशके वा विहगाः स्थलाम्बुजाः शनैश्चरेन्द्वीक्षणयोगसंभवाः ॥ ७॥

होरेन्दुसूरिरविभिर्विबलैस्तरूणां तेयस्थले तरुभुर्वोऽशकृतः प्रभेदः ।

लग्नाद्ग्रहः स्थलजलर्क्षपतिस्तु यावांस्तावन्त एव तरवः स्थलतोयजाताः ॥ ८॥

अथ रव्यादीनां वृक्षविशेषजनिकारणता ।

अन्तःसारान् जनयति रविर्दुर्भुगान् सूर्यसूनुः
क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च भौमः ।
वागीशज्ञौ सफलविफलान् पुष्पवृक्षांश्च शुक्रः
स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रस्तु भूयः ॥ ९॥

शुभोऽशुभर्क्षे रुचिरं कुभूमिजं करोति वृक्षं विपरीतमन्यथा ।
परांशके थावति विच्युतः स्वकाद् भवन्ति तुल्यास्तरवस्तथाविधाः ॥ १०॥

अथ निषेकधिधिः ।

कुजेन्दुहेतु प्रतिमासमार्तवं गते तु पीडर्क्षमनुष्णदीधितौ ।
अतोऽन्यथास्थे शुभपुङ्ग्रहेक्षिते नरेण संयोगमुपैति कामिनी ॥ ११॥

यथाऽस्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः ॥

असद्ग्रहालोकितसंयुतेऽस्ते सरोष इष्टैः सविलामहासः ॥ १२॥

रवीन्दुशुक्रावनिजैः स्वभावगैः गुरौ त्रिकोणोदयसंस्थितेऽपि। वा ।
भवत्यपत्यं हि विबीजिनागिने करा हिमांशोर्विदृशामिवाफलाः ॥ १३॥

दिवाकरेन्द्वोः स्मरगौ कुजर्कजौ गदप्रदौ पुङ्गलयोषितोस्तदा ।
व्ययस्वगौ मृत्युकरौ युतौ तथा तदेकदृष्ट्या मरणाय कल्पितौ ॥ १४॥

विवाऽर्कशुक्रौ पितृमातृसंज्ञितौ शनैश्चरेन्दू निशि तद्विपर्ययात् ।
पितृव्यमातृष्वसृसंज्ञितौ च तावथौजयुग्मर्क्षगतौ तयोः शुभौ ॥ १५॥

शीतज्योतिषि ज्योषितोऽनुपचयस्थाने कुजेनेक्षिते ।
जातं गर्भफलप्रदं खलु रजः स्यादन्यथा निष्फलम् ।
दृष्टेऽस्मिन् गुरुणा निजोपचयगे कुर्यान्निवेकं पुमान् ।
अत्याज्ये च समूलभे शुभगुणे पर्वादिकालोज्भिते ॥ १६॥

अथ स्त्रीणामृतुकालपरिमाणम् ।

विभावरीषोडश भामिनीनामृतुद्रमाद्या ऋतुकालमाहुः ।

नाद्याश्चतस्रोऽत्र निशेकयोग्याः पराश्च युग्माः सुतदाः प्रशस्ताः ॥ १७॥

अथ तुर्यादिरात्रिषु निषेके सताने विशेषः ।

पुत्रोऽल्पायुदारिका वंशकर्ता बन्ध्या पुत्रः सुन्दरीशो विरूपा ।
श्रीमान् पापा धर्मशीलस्तथा श्रीःसर्वज्ञः स्यातुर्यरात्रात् क्रमेण ॥ १८॥

अथ सुतादियोगकरी ग्रहस्थितिः ।

अष्टमाष्टमगे सूर्ये निषेकर्क्षात्सुतोद्भवाः ।
अथवाऽधानलग्नात्तु त्रिकोणस्थे दिनेश्वरे ॥ १९॥

अस्मिन्नाधनलग्ने तु शुभदृष्टियुतेऽथवा ।
दीर्घायुर्भाग्यवान् जातः सर्वविद्यान्नमेष्यति ॥ २०॥

ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः
पुङ्जन्म प्रवदेत्समांशकगतैर्युग्मेषु तयोर्षितः ।
गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियम्
द्व्याङ्गस्था बुधवीक्षणाच्च यमलौ कुर्वन्ति पक्षे स्वके ॥ २१॥

विहाय लग्नं विषमर्क्षसंस्थः सौरोऽपि पुंजन्मकरो विलग्नात् ।
प्रोक्तग्रहाणावलोक्य वीर्यं वाच्यः प्रसूतौ पुरुषोऽङ्गना वा ॥ २२॥

अथ क्रीयत्वकरा योगाः ।

अन्योन्यं यदि पश्यतः शशिरवी यद्यार्किसौम्यावपि
वक्रो वा समगं दिनेशमसमे चन्द्रोदयौ चेत्स्थितौ ।
युग्मौजर्क्षगतावपिन्दुशशिजौ भूम्यात्मजेनेक्षितौ
पुंभागे सितलग्नशीतकिरणाः षट् क्लीबयोगस्त्विमे ॥ २३॥

अथ थमलादिजनिकरा योगाः ।

युग्मे चन्द्रसितौ तथौजभवने स्युर्ज्ञारजीवोदयाः
लग्नेन्दू नृनरीक्षितौ च समगौ युग्मेषु वा प्राणिनः ।
कुर्युस्ते मिथुनं गृहोदयगतान्द्व्यंगांशकान्पश्यति
स्वांशे ज्ञे त्रितयं ज्ञगांशकवशाद्युग्मं त्वमिश्रैः समम् ॥ २४॥

अथ व्यदिकजननयोगः ।

धनुर्धरस्यान्त्यगते विलग्ने ग्रहैस्तदंशोपगतैर्बलिष्ठैः ।
ज्ञेनार्किणा वीर्ययुतेन दृष्टे सन्ति।प्रभूता आपि कोशसंस्थाः ॥ २५॥

द्विशरीरांशसंयुक्तान् ग्रहान् लग्नं च पश्यति ।
कन्यांशकगतश्चान्दिर्गर्भस्थं त्रितयं वदेत् ॥ २६॥

युग्मांशकस्तु कन्यैका द्वौ पुमांसौ च गर्भजाः ।
युग्मांशगान्विलग्नं च गर्भस्थाः पुरुषास्त्रयः ॥ २७॥

कन्यायुग्मांशकोपेतांस्तय्हा युग्मांशगो बुधः ।
कन्यानवांशकः सौम्यस्तिस्त्रो गर्भगताङ्गनाः ॥ २८॥

द्विस्वभावगतार्कगुरू बुधनिरीक्षितौ ।
पुंयुग्मं कुरुतस्तद्वत् शशिशुक्रमहीसुताः ॥ २९॥

कुर्वन्ति स्त्रीयुगं तत्र बलाबलविशेषतः ॥ २९ १/२॥

स्त्रीनपुंसकदश्चान्द्रिः पुंनपुंसक्दोऽर्कजः ॥ ३०॥

निषेककाले चन्द्रार्कावन्योन्यं यदि पश्यतः ।
तथैव चन्द्रमन्दौ वा क्लीबजन्मप्रदौ तथा ॥ ३१॥

निषेके भ्रातृलग्नेशयोगे यमलसम्भवः ।
लग्नेशे भ्रातृपक्षस्थे स्वोच्चे वा यमलोद्भवः ॥ ३२॥

षष्ठेशो देहसम्बन्धी बुधः षष्ठगतो यदि ।
बुधक्षेत्रे च यस्य स स्त्रीनपुंसकः ॥ ३३॥

बुधस्थानेन शनिना पुंनपुंसकता भवेत् ॥ १/२॥

निषेकलग्नेशतृतीयनाथौ लग्नस्थितौ चेद्यमलोद्भवः स्यात् ॥ १/२॥

अथ पादजातस्वप्रदौ योगौ ।

तृतीनाथेन युते निषेके भोगीशयुक्ते यदि पादजातः ॥ ३४॥

राहूदये लग्ननाथे कर्मस्थे पादपूर्वजः ॥ १/२॥

अथ सर्पवेष्टितदेहयदा योगाः ।

सराहौ रन्ध्रपे लग्ने जातः स्यात् सर्पवेष्टितः ॥ ३५॥

रन्ध्रेश्वरे पापयुते विलग्ने जातो नगोर्वेष्टिदेहवान्स्यात् ।
केन्द्रे सरहौ गुलिकेन युक्ते लग्नेश्वरे वावा निधनेशयुक्ते ॥ ३६॥

क्रूरग्रहाणां च दृगाणल्ग्ने जातो नगैर्वेष्टितदेहवान् स्यात् ।
लग्नत्रिभागेऽण्डजसर्पकोलास्रन्नाथयुक्तस्तु तथा त्रिभागः ।
शुभप्रदाणां च दृशा विहीने जातो नगैर्वेष्टितदेहवान् स्यात् ॥ ३७॥

यशांके पापल्ग्ने वा वृश्चिकेशत्रिभागगे ।
शुभैः स्वायस्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा ॥ ३८॥

चतुष्पादगते भानौ शेषैर्वीर्यसमन्वितैः ।
द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ ॥ ३९॥

छागसिंहवृषे लग्ने तत्स्थे सौरेऽथवा कुजे ।
राश्यंशसदृशे गात्रे जतस्थेनालवेष्टितः ॥ ४०॥

लग्ने सपापे बहुपापदृष्टे राहुध्वजाभ्यां सहितेऽथवाऽत्र ।
पापग्रहाणां विलग्नभे वा जातो नरो नालविदेष्टिताङ्गः ॥ ४१॥

क्रूरान्तरे लनगते सराहौ लग्ने कुजे वासरनाथदृष्टे ।
लग्ने शनु भुमिसुतेन दृष्टे जातो नरो नालविवेष्टिताङ्गः ॥ ४२॥

अथ प्रसूतिकालज्ञापिका ग्रहस्थितिः ।

तत्काल इन्दुसहितो द्विरसंशको यस्ततुल्यराशिसहिते पुरतः शशाङ्के ।
यावानुदेति दिनरात्रिसमानभागस्तावद्गते दिननिशोः प्रवदन्ति जन्म ॥ ४३॥

उदयति मृदुभांशे सप्तमस्थे च मन्दे ।
यदि भवति निषेकः सूतिरब्दत्रय्ण ।
शशिनि तु विधिरेष द्वादशाब्दैः प्रकुर्यात् ।
निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या ॥ ४४॥

अथ संस्कारविहीनपुत्रजन्मज्ञापका योगाः ।

पितृकर्मेश्वरौ दुःस्थौ देहेशे बलसंयुते ।
विना सीमन्तकमादि जातः पुत्रो न संशयः ।
लाभे पापे पापगृहे न सीमन्तयुतो भवेत् ॥ ४५ १/२॥

अथ पितुरसन्निधौ जन्मयोगाः ।

पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति ।
विदेशस्थस्य चरभे मध्याद्दृष्टे दिवाकरे ॥ ४६॥

उदयस्थेऽथवा मन्दे वाऽस्तं समागते ।
स्थिते वाऽन्तः चपानाथे शशाङ्कसुतशुक्रयोः ॥ ४७॥

पितरग्रसः क्षेत्रजो वेति ज्ञपिका द्युचरस्थितिः ।

लग्ने वा यदि शीतांशौ शुभखेचरराशिगे ।
ओरसोऽयं भवेज्जातो गुरुर्गसमन्विते ॥ ४८॥

जीवो न भौमसंदृष्टः स्ववर्गे चार्कचन्द्रमाः ।
क्षेत्रजोऽयं भवेज्जातः ससौम्यो वा बलान्वितः ॥ ४९॥

मन्दवर्गगते चन्द्रे मन्दयुक्ते तु पङ्चमे ।
भानुभार्गवसंदृष्टे पुत्रः पौनर्भवो भवेत् ॥ ५०॥

अथ अनूढापत्यत्व्सराधको ग्रहयोगः ।

व्यये भास्करसंदृष्टे वर्गे भास्करचन्द्रयोः ।
चन्द्रसूर्ययुते वाऽपि कानीनोऽयं भवेन्नरः ॥ ५१॥

अथ दत्तपुत्रत्वसाधको योगः ।

चन्द्रदृष्टियुतो मान्दिर्भानुपुत्रसमन्वितः
तद्वीक्षणयुतो वाऽपि दत्तपुत्रो भवेन्नरः ।
शन्यङ्गारकसंयुक्ते सप्तमे वाऽथ पङ्चमे
अन्यैरवीक्षिते खेटैः कृत्रिमं तु विनिर्दिशेत् ॥ ५२॥

अथ जारजत्वसाधका योगाः ।

परस्परक्षेत्रगतौ तु होरारसातकेशौ यदि जन्मलग्नात् ।
लग्नेश्वरो वा हिबुकेश्वरो वा ध्वजाहियुक्तो जननं परेण ॥ ५४॥

लग्नं शशाङ्कं सुरराजमन्त्री न वीक्षते नैकगृहस्थितौ वा ।
न जीववर्गगेण युतौ तदानीं जातं वदेदन्यसमागमेन ॥ ५५॥

स्वातीद्वितीया रविवारयुक्ता ससप्तमी सोमजरेवती च ।
सद्वादशीभानुसुतश्रविष्ठा चैतेषु जातः परतो वदन्ति ॥ ५६॥

भद्राण्यतिथियुक्तेषु त्रिपादर्क्षन्वितेषु च ।
मन्दार्कभौमवारेषु जात्मन्योद्भवं विदुः ॥ ५७॥

न लग्नमिन्दु च गुरुनिरीक्षते न वा शशाङ्कं रविणा समागतम् ।
सपापकोऽर्केण युतोऽथवा शशी परेण जातं प्रवदन्ति निश्चयात् ॥ ५८॥

गुरुक्षेत्रगते चन्द्रे तद्युक्ते चान्यराशिगे ।
तद्द्रेष्काणे तदंशे वा न परैर्जात इष्यते ॥ ५९॥

अथ जन्मनि पितुर्बद्धत्वादि ।

क्रूरर्क्षगतावशोभनौ सूर्याद् द्यूननवात्मजस्थितौ ।
बद्धस्तु पिता विदेशगः स्वे वा राशिवशात्तथा पथि ॥ ६०॥

अथ जन्मदेशाः ।

पूर्णे शशिनि स्वराशिगे सौम्ये लग्नगते शुभे सुखे ।
लग्ने जलजोऽस्तगेऽपि वा चन्द्रे पोतगता प्रसूयते ॥ ६१॥

आओयोदयमाप्यगः शशी सम्पूर्णः समवेक्षतेऽथवा ।
मेषूरणबन्धुलग्नगः स्यात् सूतिः सलिले न संशयः ॥ ६२॥

उदयोडुपयोर्व्ययस्थिते गुप्त्यां पापनिरीक्षिते यमे ।
अलिकर्कियुते विलग्नगे सौरे शीतलरेक्षितेऽवटे ॥ ६३॥

मन्देऽब्जगते विलग्नगे बुधसूर्येन्दिनिरीक्षिते क्रमात् ।
कीडाभवने सुरालये जननं* चोषरभूमिषूदिशेत् ॥ ६४॥

नृलग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेन्दू गुरुरग्निहोत्रे ।

रविर्नरेन्द्रामरगोकुलेषु शिल्पालयो ज्ञः प्रसवं करोति ॥ ६५॥

राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे ।
स्वर्क्षांशगते स्वमन्दिरे बलयोगात्फलमशकर्क्षयोः ॥ ६६॥

अथ मात्रा स्यक्तस्य दीर्घयुष्टम् ।

आरार्कजयास्त्रिकोणगे चन्द्रोऽस्ते च विसृज्यतेऽम्बया ।
दृष्टेऽमरराजमन्त्रिणा दीर्घयुः सुखभाक् च स स्मृतः ॥ ६७॥

अथ मात्रा स्यक्तस्य विनाशयोगः ।

पापेक्षिते तुहिनगाबुदये कुजेऽस्ते स्यक्तो विनश्यति कुजार्कजयोस्तथाऽये ।
सौम्येऽपि पश्यति तथाविधहस्तमेति सौम्ये तरेषु परहस्तगतोऽप्यनायुः ॥ ६८॥

अथ प्रसवस्थानम् ।

पितृमातृगृहेषु तद्बलात्तरुशालाइषु नीचगतैः शुभैः ।
यदि नैकगतैश्च वीक्षितौ लग्नेन्दू विजने प्रसूयते ॥ ६९॥

मन्दर्क्षांशे शशिनि हिबुके मन्ददृष्टेऽब्जगे वा
तद्युक्ते वा तमसि शयनं नीचसंस्थैश्च भूमौ ।
यद्वद्राशिर्व्रजति हरिजं गर्भमोक्षस्तु तद्वत् ॥ ७०॥

अथ सूतीगृहे दीपज्ञानं द्वारज्ञानं च ।

स्नेहः शशाङ्कादुदयाच्च वर्ती दीपोऽर्कयुक्तर्क्षवशाणराद्यः ।
द्वारं च तद्वास्तुनि केन्द्रसंस्थैर्क्ष्यं ग्रहैर्वीर्यसमनिव्तैर्वा ॥ ७१॥

अथ सूतीगृहस्वरूपम् ।

जीर्णं संस्कृतमर्कजे क्षितिसुते दग्धं नवं शीतगौ
काष्ठाढ्यं सुदृढं रवौ शशिसुते चानेकशिल्प्युद्भवम् ।
रम्यं चित्रयुतं नवं च भृगुजे जीवे दृढं मन्दिरं
चक्रस्थैस्तु यथोपदेशरचनां सामन्तपूर्वां वदेत् ॥ ७२॥

अथ सुतीगृहदिशा ।

मेषकुलीरतुलालिघतैः प्रगुत्तरते गुरुसौम्यगृहेषु ।
पश्चिमतश्च वृषेण निवासो दक्षिणभागकरौ मृगसिंहौ ॥ ७३॥

अथ सूतीगृहे जन्मस्थानम् ।

प्राच्यादिगृहे क्रियादयो द्वौ द्वौ कोणगता द्विमूर्तयः ।
शय्यास्वपि वास्तुवद्वदेत् पातैः षट्त्रिनवान्त्यसंस्थितैः ॥ ७४॥

अथ उपसुतिकाज्ञानम् ।

लग्नचन्द्रान्त्रगतैर्ग्रहैः स्युरुपसूतिकाः ।
बहिरन्तश्च चक्रार्द्धे दृशादश्येऽन्षवा परे ॥ ७५॥

अथ जातकस्य स्वरूपादिज्ञानम् ।

लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वा ।
चन्द्रसमेतनवांशपर्वणः कादिविलग्नविभक्तभगात्रः ॥ ७६॥

कन्दृक्षोत्रनसाकपोलहनवो वक्त्रं च होरादय-
स्ते कण्ठांसकबाहुपाश्वहृदयक्रोडानि नाभिस्ततः ।
बस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी
जडाङ्ध्रीत्युन्जयत्र वाममुदितैर्द्रेक्काणभागैस्त्रेधा ॥ ७७॥

अथ जाताङ्गे चिह्नज्ञानम् ।

तस्मिन्पापयुते व्रणं शुभयुते दृष्टे च लक्ष्मादिशेत्
स्वर्क्षांशे स्थिरसंयुते च सहजः स्यादन्यथाऽगन्तुकः ।
मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः
सूर्ये काष्ठचतुष्पदेन हिमगौ शृङ्ग्यब्जजोऽन्यैः शुभम् ॥ ७८॥

समनुपतिता यस्मिन् भागे त्रयः सबुधा ग्रहा
भवति नियमातस्यावाप्तिः शुभेष्वशुभेषु वा ।
व्रणकृदशुभः षष्ठे देहे तनोर्भसमाश्रिते
तिलकमशकृद्दृष्टः सौम्यैर्युतश्च स लक्ष्मवान् ॥ ७९॥

वियोनिजन्मविज्ञानं निषेकोदयजं फलम् ।
जन्मकालप्रिज्ञानं यत्तदाचार्यभाषितम् ॥ ८०॥

इति नवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते
आधानजन्माध्यायस्तृतीयः ॥ ३॥

अथारिष्टाध्यायः ॥ ४॥

तत्रादौ द्वादशाप्दीमध्ये आयुषोऽनिश्चितता

आद्वादशाब्दान्तयोनिजन्मनामायुष्कला निश्चयुतिं न शक्यते ।
मात्रा च पित्रा कृतपापकर्मणा बालप्रहैर्नाशमुपैति बालकः ॥ १॥

आद्ये चतूष्के जननीकृताधैर्मध्ये तु पित्राऽजितपापसैः ।
बालस्तदन्त्यासु चतुः समासु स्वकीयदोषैः समुपैति नाशम् ॥ २॥

अथारिष्टपूर्वकमायुषां भेदाः ।

अष्टौ बालारिष्टमादौ नराणां योगारिष्टं प्राहुराविंशतिः स्यात् ।
अल्पं चान्द्रात्रिंशतान्मध्यमायुरासप्तत्याः पूर्णमायुः शतान्तम् ॥ ३॥

अथ अरिष्टदा ग्रहस्थितिः ।

विलग्नगतस्त्वपि देवमन्त्री विनाशरिःफारिगते शशाङ्के ।
विलोकिते पापवियचरेण विभानुना मृत्युमुपैति ग्र॥॥ः ॥ ४॥

गण्डान्ततारासहिते मृगाक्के पापेक्षिते पापसमन्विते वा ।
बालो लयं यति समृत्युभागे चन्द्रे तथा पापनिरीक्षिते वा ॥ ५॥

ताताविकासोदरभातुलाश्च मातामही मातृपता च बालः ।
सूर्यादिकैः पङ्चमधर्मयातैः क्रूरर्क्षगैराशु हताः क्रमेण ॥ ६॥

रसातलस्थौ यदि भानुचन्द्रौ शनिः स्मरस्थो मरणाय मातुः ।
यदा यदा क्रूरखगो विलग्नादरातिगः सोदरनाशहेतुः ॥ ७॥

अथ पित्रादीनामरिष्टयोगाः ।

तातान्विकासोदरमातुलाश्च मातामही मातृपिता च बालः ।
सूर्यादिकैः पङ्चमधर्मयातैः क्रूरर्क्षगैराशु हताः क्रमेण ॥ ६॥

रसातलस्थौ यदि भानुचन्द्रौ शनिः स्मरस्थो मरणाय मातुः ।
यदा य्(व्)दा क्रूरखगो विलग्नादरातिगः सोदरनाशहेतुः ॥ ७॥

क्रूरेक्षितौ चन्द्रविलग्नराशी सौम्यग्रहैर्वीच्चणयोगहीनौ ।
केन्द्रच्युतो यद्यमरेशमन्त्री जातस्य भाता समुपैति नाशम् ॥ ८॥

अथ सगर्भामृत्युयोगौ ।

सभानुजे शीतकरे विलग्नाद् दिवाकरे रिःफगृहोपयाति ।
धरासुते नधुगते तदानीं विपद्यते तज्जननी सगर्भा ॥ ९॥

विलग्नचन्द्रौ शुभदृक्विहीनावशोभनव्योमचरान्तरस्थौ ।
विनाशमेति प्रमदा सगर्भा वदन्ति सर्वे युगपत् पृथग्वा ॥ १०॥

षष्ठावसानाष्टमभावगेषु क्रूरेषु सौम्यग्रहवर्जितेषु ।
पापान्तरस्थे भृगुजे गुरौ वा नारी सपुत्रा म्रियते तु सद्यः ॥ ११॥

लग्नास्तयातौ यदि पापखेचरौ शुभैरयुक्तौ शुभदृईष्टिवर्जितौ ।
शस्त्रेण मृत्यु समुपैति गर्भिणी मासाधिपो नष्टकरो यदा वदेत् ॥ १२॥

अथ जातस्य मातृमरणयोगाः ।

चन्द्राचतुर्थोपगतैरसद्भिर्वा नस्थितैः शोभनदृष्टिमुक्तैः ।
व्यापारगैर्वा यदि वासरेशाज्जातस्य माता निधनं प्रयाति ॥ १३॥

शुक्राद्रवौ विक्रमगे बलाध्ये मन्देक्षिते मन्दसमन्विते वा ।
क्षीणे शशाङ्ले यदि वा सपापे माता सपुत्रा म्रियते,अचिरेण ॥ १४॥

लग्नादिने वाऽष्टमगे धराजे पापेक्षिते सौम्यदृशा विहीने ।
ताराधिपे वृद्धिकलाविहीने माता कृतान्तस्य पदं समेति ॥ १५॥

शुक्रात् कुजेऽहनि तपः सुतराशियात् चन्द्रात्रिकोणगृहगे रविजे रजन्याम् ।
पापेक्षिते च शुभयोगदृशा विहीने नाशं समेति जननी विबले शशाङ्के ॥ १६॥

अथ गर्भस्य मासधिपाः(होरायाम्)

कललग्ननाक्कुरास्थिचर्माङ्गज्चेतनताः

सितकुजजीवरविचन्द्रार्कुबुधाः परतः ।
उदयकुजजीवरविचन्द्रार्किबुधाः गदिता
वदन्ति शुभाशुभं च मासाधिपतेः सदृशम् ॥ १७॥

अथ गर्भ सुखम् ।

शशाङ्कलग्नोपगतैः शुभग्रहैस्त्रिकोणजायार्थसुखास्पदस्थितैः ।
तृतीयलाभर्क्षगतैश्च पापकैः सुखी च गर्भो रविणा निरीक्षितः ॥ १८॥

अथ जातस्य पितृमरणयोगाः ।

व्ययस्थितेऽर्के ससुते विलग्नादपि क्षयेन्दौ मदनोपयाते ।
पितुर्वियोगं प्रव्दन्ति सद्यः शुभेक्षिते तु त्रिभिरब्दमानैः ॥ १९॥

चरोपगे चन्द्रमसि क्षपायां बुधेक्षिते दूरदिशं प्रयातः ।
चरे शनौ भानुयुते निशायां विदेशगो वाति पिता विनाशम् ॥ २०॥

अथ जातस्य मृत्युयोगाः ।

क्षीणे शशिन्युदयगे यदि कण्टकस्थे पापेऽथवा निधनगे म्रियतेऽथ बालः ।
रन्ध्ररिगैरशुभखेटदृशा समेतैः सौम्यैः कृतान्तनगरं समुपैति मासात् ॥ २१॥

एकत्र मन्दावनिनन्दनार्का रन्ध्रस्थिता वा रिपुराशियाताः ।
सौम्यैरयुक्ता अविलोकितास्ते जातस्य सद्यो मरणप्रदाः स्युः ॥ २२॥

चन्द्रांशे सओप्तमे भौमे सौम्यदृष्टिविवर्जिते ।
सप्तसप्ततितारायामुपैति मरणं शिशुः ॥ २३॥

मन्दावनिजमार्तण्डैः पुत्रस्यानसमन्वितैः ।
सप्तसप्ततिनक्षत्रे जातस्य मरणं वदेत् ॥ २४॥

धरसुते चन्द्रनवांशकस्थे लग्नांशके वा न च जीवदृष्टे ।
सुधाकरे नन्दनराशियाते समेति याम्यं पदभाशु बालः ॥ २५॥

नीचं गते लग्नपतौ विलग्नान्नाशं गते वा रविजे तथाऽस्ते ।
जातो मृतप्रायकलेवरः सन्कृच्छ्रेण वैवस्वतलोकमिति ॥ २६॥

अपोक्लिमस्थानगता न भोगा विधूतवीर्या यदि भानुमुख्याः ।

मासद्वयं तस्य वा जातस्य चायुः कथयन्ति तज्ज्ञाः ॥ २७॥

लग्नारिरन्ध्रव्ययगे शशाङ्के पापेन दृष्टे शुभदृष्टिहीने ।
केन्द्रेषु सौम्यग्रहवर्जितेषु प्राणैवियोगं व्रजति प्रजातः ॥ २८॥

सौरे मदस्थे यदि वा विलग्ने जलोदयऽब्जे यदि कीटगे वा ।
सौम्येषु केन्द्रोपगतेषु सद्यो जातस्य नाशं यवनोपदिष्टम् ॥ २९॥

भौमक्षेत्रगते जीवे नीचराशिगतेऽथवा ।
सन्ध्यात्रये च सञ्जातो मासान्मृत्युमुपैति सः ॥ ३०॥

रन्ध्रे धरासूनुदिनेशसौरा जातस्तु मृत्युं समुपैति मासात् ।
केतुस्तु यस्मिन्नुदितोऽत्र जातो मासद्वयेनैव यमं प्रयाति ॥ ३१॥

पापाबुदयास्तगतौ क्रूरेण युतश्च शशी ।
दृष्टश्च शुभैर्न यदा मृत्युश्च भवेदचिरात् ॥ ३२॥

क्षीणे हिमगौ व्ययगे पापैरुदयाष्टमगैः ।
केन्द्रेषु शुभाश्च न चेत् क्षिप्रं निधनं प्रवदेत् ॥ ३३॥

क्रूरेण संयुतः शशी स्मरान्त्यमृत्युलग्नगः ।
कण्टकाद्विःशुभैरवीक्षितश्च मृत्युदः ॥ ३४॥

शशिन्यरिविनाशगे निधनमाशु पापेक्षिते ।
शुभैरथ समाष्टकं दलमतश्च मिश्रेक्षिते ।
असद्भिरवलोकिते बलिभिरत्र म(भ)आसं शुभे
कलत्रसहिते च पापविजिते विलग्नाधिपे ॥ ३५॥

अशुभसहिते ग्रस्ते चन्द्रे कुजे निधनाश्रिते
जननिसुतयोर्मृत्युलग्ने रवौ तु सशस्त्रजः ।
उदयति रवौ शीतांशौ वा त्रिकोणविनाशगै-
र्निधनमशुभैर्वीर्योपेतैः शुभैरयुतेक्षिते ॥ ३६॥

असितरविशशाङ्कभूमिजैर्व्ययनवमोदयनैधनाश्रितैः ।
भवति मरणमाशु देहनां यदि बलिना गुरुणा न वीक्षितैः ॥ ३७॥

सुतमदननवान्त्यलग्नरन्ध्रेष्वशुभयुते मरणाय शीतरश्मिः ।
भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितां वा ॥ ३८॥

अथ वर्षमध्ये मरणम् ।

योगे स्थानं बलनश्चन्द्रे स्वं वा तनुगृहमथवा ।
पपैर्दृष्टे बलवति मरणं वर्धस्यान्तः किल मुनिगदितम् ॥ ३९॥

अथ वर्षद्धयमायुः ।

वक्री शनिभौमगृहोपयातः केन्द्रेऽथवा शत्रुगृहे विनाशे ।
कुजेन सम्प्राप्तबलेन दृष्टो वर्षद्वयं जीवयति प्रजातम् ॥ ४०॥

अथ वर्षत्रयमायुः ।

बृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्येन्दुभौमार्कजदृष्टमूर्तिः ।
अब्दैस्त्रिभिर्भार्गवदृष्टिहीनो लोकान्तरं प्रापयति प्रजातम् ॥ ४१॥

अथ चतुर्थवर्ष मरणम् ।

षष्ठाष्टमे कर्किणि जन्मलग्नात् सौम्ये सुधारश्मिनिरीक्ष्यमाणो ।
अब्दैश्चतुर्भिः समुपैति नाशं जातो नरः सर्वबलान्वितोऽपि ॥ ४२॥

अथ पङ्चमेऽब्दे मरणम् ।

रविचन्द्रभौमगुरुभिः कुजगुरुसौरेन्दुभिः सहैकस्थैः ।
रविशनिभौमशशाङ्कैर्मरणं खलु पङ्चमिवर्षैः ॥ ४३॥

अथ षद्वर्षमायुः ।

यदा सुधारशिमनवांशकस्थे निरीक्षिते शीतकरेण मन्दे ।
लग्नाधिपे चन्द्रदृशा समेते जातस्य षद्वर्षमितं तदाऽयुः ॥ ४४॥

अथ सप्तमेऽब्दे मरणम् ।

लग्ने यद्द्रेक्काणो निगलाहिहिहङ्गपाशधरसूज्ञः ।
मरणाय सप्तवर्षैः क्रूरयुतो न स्वपतिसंदृष्टः ॥ ४५॥

अथ सप्ताष्टवर्षे मृत्युः ।

लग्ने रविशनिभौमाः शुक्रगृहे सप्तमे शशी क्षीणः ।
दृष्टो न देवगुरुणा सप्तभिरष्टभिरब्दकैर्वा स्यात् ॥ ४६॥

अथ नवमेऽब्दे मृत्युः ।

दिवकरेन्दुभूपुत्रः पुत्रस्यानसमन्विताः ।
जातो यमपुरं याति नवमाब्दे न संशयः ॥ ४७॥

पापो विलग्नाधिपतिः शशांकादन्यस्थतः क्रूरनिक्षितश्चेत् ।
चन्द्रांशकस्थे यदि वा तदीशो जातः शिशुर्याति लयं नवाब्दैः ॥ ४८॥

अथ दशवर्शायुः ।

मृगांशकस्थिते मन्दे सौम्यदृष्टिसमन्विते ।
जन्मप्रभृतिशत्रुत्वं तस्यायुर्दशवत्सरम् ॥ ४९॥

अथ एकादशे वर्षे मरणम् ।

रविणा युक्तः शशिजः सौम्यैर्दृष्टो विनाशयति ।
एकादशभिर्वर्षैर्जातं नृपतुल्यभोगसम्पन्नम् ॥ ५०॥

अथ द्वादशेऽब्दे मरणम् ।

चन्द्रलग्नाधिपः सूर्यः स्वपुत्रेण समन्वितः ।
लग्नादष्तमराशिस्थो द्वादशाब्दे सितेक्षितः ॥ ५१॥

अल्यांशकस्थिते मन्दे सूर्येणैव निरीक्षिते ।
पितृद्वषसमायुक्तो द्वादशाब्दं च जीवति ॥ ५२॥

अथ त्रयोदशेऽब्दे मृत्युः ।

लग्नांशकस्थिते मन्दे जीवदृष्टिसमन्विते ।
त्रयोदशाब्दे मरणम् जातस्य पितृवैरिणः ॥ ५३॥

अथ चतुर्थदशऽब्दे मृत्युः ।

कन्यांशकस्थिते मन्दे सौम्यदृष्टिसमन्विते ।
चतुर्दशाब्दे मरणं जातः कोपी समेति च ॥ ५४॥

अथ पङ्चदशाब्दय्युः ।

सिमांशकस्थिते मन्दे राहुणा च निरीक्षिते ।
शस्त्रपीडा भवेत्तस्य चायुः पङ्चदशाब्दकम् ॥ ५५॥

अथ षोदशेऽब्दे मरणम् ।

कर्काशकस्थिते मन्दे जीवदृष्टिसमन्विते ।
सर्पपीडा भवेत्तस्य षोडशाब्दान्मृतिं वदेत् ॥ ५६॥

अथ सप्तदशेऽब्दे मृत्युः ।

यमांशकस्थिते मन्दे लग्ननाथेन वीक्षिते ।
रणशूरो महाभोगी मृतः सप्तदशाब्दके ॥ ५७॥

अथ अष्टादशेऽब्दे मृत्युः ।

परस्परक्षेत्रसमन्वितौ वा रन्ध्रेशलग्नाधिपती न सौम्यौ ।
रिःफारिभे वा गुरुणा वियुक्ते त्वष्टादशाब्दे निधनं प्रयाति ॥ ५८॥

अथ सद्यो मृत्युः ।

जीवांशकस्थिते मन्दे राहुणा च निरीक्षिते ।
देहाधिपे शुभादृष्टे जातः सद्यो वुनश्यति ॥ ५७॥

अथ १९ वर्षे मृत्युः ।

तदीशस्तुङ्गभागश्चेदायुरेकोनविंशतिः ॥ ५८॥

अथ २० वर्षे मृत्युः ।

केन्द्रेषु पापेषु निशाकरेण सौम्यग्रहैरीक्षणवर्जितेषु ।
षष्ठाष्टमे वा यदि शीतरश्मौ जातः सुखी विंशतिवत्सरान्तम् ॥ ५९॥

अथ २२ वर्षे मृत्युः ।

जीवेन सहितः सूर्यो लग्नस्थः कीटराशिगः ।

अष्टमाधिपतौ केन्द्रे द्वाविंशत्यब्दके मृतिः ॥ ६१॥

२६/२७ वर्षे मृत्युः ।

मन्दोच्चे शत्रुराशौ सौम्यैरापोक्लिमोपगैः ।
षड्विंशत्यब्दके वा स्यात् सप्तविंशतिवत्सरे ॥ ६२॥

अथ २८ वर्षे मरणम् ।

रन्ध्रेशे जीवसंदृष्टे पापे पापनिरीक्षिते।
रन्ध्रस्थे जन्मपे मृत्युरष्टाविंशतुवत्सरे ॥ ६३॥

अथ २९ वर्षे मृत्युः ।

चन्द्रे मन्दसहायस्तु सूर्यश्चाष्टमसंस्थितः ।
एकोनत्रिंशके वर्षे जातो यम्पुरं व्रजेत् ॥ ६४॥

अथ २९ वा ३० वर्षे मृत्युः ।

जन्मरन्ध्रपयोर्मध्ये निशानाथे व्यये गुरौ ।
सप्तविंशतिवर्षे वा त्रिंशद्वयसि वा मृतिः ॥ ६५॥

अथ ३२ वर्षे मरणम् ।

अष्टमाधिपतौ केन्द्रे लग्नेशे बलवर्जिते ।
त्रिंशद्वर्षमितायुष्मान् द्वात्रिंशद्वत्सरे मृतिः ॥ ६६॥

क्षीणे शशाङ्के यदि पापयुक्ते रन्ध्राधिपे केन्द्रगतेऽष्टमे वा ।
पापान्विते हीनबले विलग्ने द्वात्रिंशदब्दे निधनं प्रयाति ॥ ६७॥

अथ अल्पायुर्योगाः ।

षष्ठाष्टमे व्यये पापे लग्नेशे दुर्बले सति ।
अल्पायुरनपत्यो वा शुभदृग्योगवर्जिते ॥ ६८॥

क्रूरषष्ठ्यंशकए वाऽपि रन्ध्रेशे भानुजेऽपि वा ।
पापान्विते पापखेटे चाल्पमायुर्विनिर्दिशेत् ॥ ६९॥

व्ययार्थौ पापसंयुक्तौ शुभदृष्टिविवर्जितौ ।
क्रूरषष्ठ्यंशसंयुक्तौ वाऽल्पमायुर्विनिरिदिशेत् ॥ ७०॥

इति द्वात्रिंशद्वत्सरान्तर्भूतबालारिष्टयोगारिष्टस्वल्पायुर्भेदाः समाप्ताः ।

अथआरिष्टभङ्गाः ।

अत्यन्तसत्त्वे यदि लग्ननाथे सौम्यान्विते तादृशदृष्टियोगे ।
केन्द्रस्थिते पापदृशा विहीने सद्भाग्ययुग् जीवति दीर्घमायुः ॥ ७१॥

अथ चन्द्रकृतोऽरिष्टभङ्गः ।

चन्द्रः सन्पूर्णगात्रस्तु सौम्यक्षेत्रांशगोऽपि वा ।
सर्वारिष्टनिहन्ता स्याद् विशेषाच्छुक्रवीक्षितः ॥ ७२॥

अथ शुभग्रहकृतोऽरिष्टभङ्गः ।

जीवभार्गवसौम्यानामेकः केन्द्रगतो बली ।
पापकृद्योगहीनश्चेत्सद्योऽरिष्टस्य भङ्गकृद् ॥ ७३॥

अथ चद्रकृतोऽरिष्टभङ्गः ।

स्वोच्चस्थः स्वगृहेऽथवापि सुहृदां वर्गे च सौम्यस्य वा ।
सम्पूर्णः शुभवीक्षितः शशधरो वर्गे स्वकीयेऽपि वा ॥ ७४॥

शत्रूणामवलोकनादिरहितः पापैरयुक्तेक्षितो।
अरिष्टं हन्ति उदुस्तरं दिनमणिः प्रालेयराशिं यथा ॥ ७५॥

पक्षे सिते भवति जन्म यदि क्षपायां कृष्णेऽथवाऽहनि शुभाशुभदृष्टमूर्तिः ।
तं चन्द्रमा रिपुविनाशग्तोऽपि नूनमापत्सु रक्षति पितेव शिशुं प्रजातम् ॥ ७६॥

अथ गुरुकृतोऽरिष्टभङ्गः ।

केन्द्रोपगोऽतिबलवान् स्फुरदंशुमली स्वर्लोकराजसचिवः शमयेदवश्यम् ।
एको बहुनि दुरितानि उदुतराणि भक्त्या प्रयुक्त इव शूलधरे प्रणामः ॥ ७७॥

अथ लग्नेशकृतोऽरिष्टभङ्गः ।

लग्नेशे बलयुक्तश्चेत् त्रिकोणे वा चतुष्टये ।
अरिष्टयोगजातोऽपि बालो जीवति निश्चयः ॥ ७७॥

अथ ग्रहकृतोऽरिष्टभङ्गः ।

यस्य जन्मनि तुङ्गस्याः स्वक्षेत्रस्थान्माश्रिताः ।
चिरायुषं शिशु जातं कुर्वन्त्यत्र न संशयः ॥ ७८॥

अथ राहुकृतोऽरिष्टभङ्गः ।

राहुस्त्रिषष्ठलाभे लग्नत्सौम्यैर्निरीक्षितः सद्यः ।
नाश्यति सर्वदुरितं मारुत् इव तलसङ्गातम् ॥ ७९॥

अजव्वृषकर्किविलग्ने रक्षति राहुर्निरन्तरं बालम् ।
वृथिवीपतिः प्रसन्नः कृतापराधं यथा पुरुषम् ॥ ८०॥

अथ पुमश्चन्द्रकृतोऽरिष्टभङ्गः ।

निशाकरः शोभनवर्गयुक्तः शुभेक्षितः पूरितदीप्तिजालः ।
जानस्य निःशोषमरिष्टमाशु निहन्ति यद्वद् गरलं गरुत्मान् ॥ ८१॥

अथ राशीशकृतोऽरिष्टभङ्गः ।

चन्द्राधिष्ठतराशीशे लग्न्स्थे शुभवीक्षिते ।
भृगुणा वीक्षिते चन्द्रे स्वोच्चेऽरिष्टं हरेत्तदा ॥ ८२॥

अथ लग्नेशकृतोऽरिष्टभङ्गः ।

लग्नाधिपोऽतिबलशुभैरदृष्टः केन्द्रस्थितः शुभखगैरवलोक्यमानः ।
मृत्युंविधूय विदधाति स दीर्घमायुः सार्धं गुणैर्बहुभिरूर्जितराजलक्ष्म्या ॥ ८३॥

अथ मध्यमायुःप्रदता जीवस्य ।

बलहीने विलग्नेशे जीवे केन्द्रत्रिकोणगे ।
षष्ठामव्यये पापे मध्यमायुरुदाहृतम् ॥ ८४॥

द्वात्रिंशद्वत्सरादुपति सप्ततिपर्यन्तं मध्यमायुर्योगः ।

अथ पूर्णयुःप्रदा योगाः ।

चतुष्टये शुभैर्युक्ते लग्नेशे शुभसंयुते ।
गुरुणा दृष्टिसंयोगे पूर्णमायुर्विनिर्दिशेत् ॥ ८५॥

केन्द्रान्विते विलग्नेशे गुरुशुक्रसमन्विते ।
ताम्यां  निरिक्षिते वाऽपि पूर्णमायुर्विनिर्दिशेत् ॥ ८६॥

उच्चान्वितैस्त्रिभिः खेटैर्लग्नरन्ध्रेशसंयुतैः ।
रन्ध्रे पापविहीने च दीर्घमायुविनिर्दिशेत् ॥ ८७॥

रन्ध्रेस्थितैस्त्रिभिः खेटैः स्वोच्चमित्रस्ववर्गगैः ।
लग्नेशे बलसंयुक्ते दीर्घमायुविनिर्दिशेत् ॥ ८८॥

स्वोच्चस्थितेन केनापि खेचरेण समन्वितः ।
शनिर्वा रन्ध्रनाथो वा दीर्घमायुविनिर्दिशेत् ॥ ८९॥

त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
लग्नेशे बलसंयुक्तः पूर्णमायुर्विनिर्दिशेत् ॥ ९०॥

षट्सप्तन्ध्रभावेषु उभेषु सहितेषु च ।
त्रिषडायेषु पापेषु दीर्घमायुर्विनिर्दिशेत् ॥ ९१॥

रिःफशत्रुगताः पापा ल्ग्नेशे यदि केन्द्रगः ।
रन्ध्रस्थानगता पापाः कर्मेशः बहुसम्मतम् ॥ ९२॥

रन्ध्रे शस्थगृहाधीशो यस्मिन् राशौ व्यवस्थितः ।
तदीशो लग्ननाथश्च केन्द्रगो यदि तादृशम् ॥ ९३॥

द्विस्वभावं गते लग्ने तदीशे केन्द्रगेऽपि वा ।
स्वोच्चमूलत्रिकोणे वा चिरं जीवति भाग्यवान् ॥ ९४॥

द्विस्वभावं गते लग्ने लग्नेशात् केन्द्रगौ यदि ।
द्वौ पापौ यस्य जनने तस्यायुर्दीर्घमादिशेत् ॥ ९५॥

चरांशकस्था रविमन्दभौमाः स्थिरांशकस्थौ गुरुदानवेज्यौ ।
शेषाश्च युग्मांशगता यदि स्युस्तदा समुद्भूतनरः शतायुः ॥ ९६॥

अथ पूर्णयुषः प्रमाणम् ।
सप्तत्युपरिशतान्तं पूर्णमायुः ।

अथ योगविदेषात् युगान्तमायुः ।

मन्दांशकस्था रविजीवभौमा धर्मस्थितास्तन्नवभागसंस्थाः ।
बलान्विता लग्नगतो हिमांशुर्युगान्तमायुः श्रियमादधाति ॥ ९७॥

अथ मुनित्वप्रदो ग्रहयोगः ।

एकांशभागौ गुरुसूर्यपुत्रौ धर्मस्थितौ वा यदि कर्मसंस्थौ ।
अर्कोदये सौम्यनिरीक्ष्यमाणौ मुनिर्भवेदत्र भवश्चिरायुः ॥ ९८॥

अथ अमितमायुः ।

गुरुशशिसहिते कुलिरलग्ने शशितनये भृगुजे च केन्द्रयाते ।
भवरिपुहजोपगैश्च शेषैरमितमिहायुरनुक्रममाद्विना स्यात् ॥ ९९॥

अथ देवसादृश्यप्रदा ग्रहस्थितिः ।

त्रिकोणे पापनिर्मुक्ते केन्द्रे सौम्यविवर्जिते ।
रन्ध्रे पापविहीने च जातस्त्वमरसन्निभः ॥ १००॥

शन्यादिभौमपर्यन्तं लग्नादौ खेचराः स्थिताः ।
वैशेषिकांशसंयुक्ता जातस्त्वमरसन्निभः ॥ १०१॥

अथ श्रसङ्ख्यायुःप्राप्तिः ।

मेषान्त्यलग्ने सगुरौ भृगौ वा निशाकरे गोगृहमध्यमांशे ।
सिंहासनांशे यदि वा धराजे जातस्त्वसङ्ख्यातमुपैति मन्त्रैः ॥ १०२॥

अथ मुनिसमत्वम् ।

देवलोकांशके मन्दे भौमे पारावतांशके ।
सिंहासने गुरौ लग्ने जातो मुनिसमो भवेत् ॥ १०३॥

अथ युगान्तमायुः ।

गोपुरांशे गुरौ केन्द्रे शुक्रे पारावतांशके ।
त्रिकोणे कर्कटे लग्ने युगान्तं स तु जीवति ॥ १०४॥

अथ ब्रह्मपदप्राप्तिः ।

चापांशे कर्कटे लग्ने तस्मिन् देवेन्द्रपूजिते ।
त्रिचतुर्भिर्ग्रहैः केन्द्रे जातो ब्रह्मपदं व्रजेत् ॥ १०५॥

लग्ने सेव्ये भृगौ कामे कन्यायामुडुनायके ।
चापे मेषांशके लग्ने जातो याति परं पदम् ॥ १०६॥

अथ आयुषः सप्तविधता ।

बालारिष्टं योगसङ्जातमल्पं तेषां भङ्गान्मध्यमं दीर्घमायुः ।
दिव्यं योगाम्यासमन्त्रक्रियाद्यैरायुः सपतैतानि सङ्कीर्तितानि ॥ १०७॥

इति श्रीनवग्रहकृपया वैद्यनाथरचिते जातकपारिजाते
बालारिष्टाध्यायः चतुर्थः ॥ ४॥

अथ आयुर्दायाध्यायः ॥ ५॥

निसर्गपैड्यांशकरश्मिचक्रनक्षत्रदायाष्टवर्गजाति ।
पराशराद्यिः कथितानि यानि संगृह्य तानि क्रमशः प्रवच्मि ॥ १॥

अथ निसर्गायुषो वर्षसङ्ख्यह् ।

नरवाः ययी द्वु धृतिय्च धृतिय्च कृतिः खबाणा राविपूर्वकाणाम् ।
इमा निरुक्ताः क्रमयो ग्रहाणां नैसर्गिके ह्यायुषि वर्षसंख्याः ॥ २॥

अथ पिण्डायुषो वर्षसंख्यः ।

नवेन्दवो वाणयमाः शरक्ष्मा दिवाकराः पश्चभुवः कुपक्षाः ।
नखाश्च भाखत्प्रमुखप्रहाणां पिण्डायुषोऽब्दा निजतुङ्गानाम् ॥ ३॥

अथ पिण्डायुषः स्पष्टीकरणविधिः ।

निजोश्चशुद्धः खचरो विशोध्योः भमण्डलात् षड्भवनोनकश्चेत् ।
यथास्थितः षड्भवनाधिकश्चेल्लीकृतः सङ्गुणितो निजाब्दैः ॥ ४॥

तत्र खाभ्ररसचन्द्रलोचनैरुद्धृते सति यदाप्यते फलम् ।
वर्षमासदिननाडिकार्दकं ताद्धि पीण्डभवमायुरुच्यते ॥ ५॥

स्वोच्चोनस्फुटखेचरं यदि रसादल्पं भचक्रोद्धृतम्
लिप्तीकृत्य निजायुरब्दगुणितं तच्चक्रलिप्ताहृतम् ।
लब्धं वासरनायकादिखचरैर्दत्तायुरब्दादिकम्
नीचार्द्धक्रमशो वदन्ति भुनयः पैण्डये च नैसर्गिके ॥ ६॥

अथायुषो हरणं होरायाम् ।

नीचेऽतोऽर्त्द्धं ह्रसति हि तत्श्चान्तरस्थेऽनुपातो
होरा त्वांशप्रतिभमपरे राशितुल्यं वदन्ति ।
हित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभागः
सूर्योचिक्षत्रद्युतिषु च दलं प्रोज्भूय शुक्रार्कपुत्रौ ॥ ७॥

क्षोणीपुत्रं वर्जियत्वा रिपुस्थार्व्यंशं नीचस्थानगास्ते तदर्धम् ।
अस्तं याताः शर्व एवार्द्धहानिं कुर्युहित्वा शुक्रमार्तण्डपुत्रौ ॥ ८॥

अथ व्ययादिहरणम्

सर्वार्द्धत्रिचरणपश्चषष्ठभागाः क्षीयन्ते व्ययभवनादसत्सु वामम् ।
सत्स्वर्धं हसति तथैकराशिगानामेकोऽम्श हरति बली तथाऽह सत्यः ॥ ९॥

एकर्क्षोपगानां यो भवति बलाधिको विशेषेण ।
क्षपयति यथोत्कभंशं स एव नान्योऽपि तत्रस्थः ॥ १०॥

अथ क्रुरोदयहरणम् ।

सार्द्धोदितोदितनवांशहतात्समस्ताद् भागोऽष्टयुक्तशतसद्ख्य उपैति नाशम् ।
क्रूरे विलग्नसहिते विधिना त्वनेन सौम्येक्षिते दलमतः प्रलयं प्रयाति ॥ ११॥

लिप्रिभूतैर्लग्नभावैर्नहन्यादायुर्द्धयं खेचराणां पृथक्स्यम् ।
व्योमाकाशत्विन्दुपक्षैर्भजेत्तत् स्वायुर्दायाच्छोध्यमब्दादि लब्धम् ॥ १२॥

एतत् क्रूरे लग्नके सौम्यदृष्टे तस्मिन्पापे तत्फलार्द्धं विशोध्यम् ।

एतरायेनां शसङ्ज्ञे विधेयं पिण्डायुर्वत् कर्म नैसर्गिके च ॥ १३॥

अथ लग्नायुःसाधनम् ।

आयुस्थैतेषु बलाढ्यलग्ने विहाय राशीन् कृतलिप्तिकेऽत्र ।
भक्ते द्विशत्या फलमब्दपूर्वं यत्स्याद्विलग्नायुषि तञ्च योज्यम् ॥ १४॥

लग्नराशिसमाश्चाब्दास्तन्मासाद्यनुपाततः ।
लग्नायुर्दृष्यमिच्छन्ति होराशास्त्रविशारदाः ॥ १५॥

अथ षड्विधरणम् ।

क्रूरोदयास्तरिपुनीचस्वगीपगानां रिःफायमाननवरन्ध्रकलत्रगानाम् ।
कृत्वा यथाहरणषत्कमिनादिकानां लग्नायुषा सह युते यदि तुल्यमायुः ॥ १६॥

अथ अंशकायुः ।

स्वमतेन किलाह जीवशर्मा ग्रहदायं परमायुपः स्वरांशम् ।
ग्रहभुक्तनवांशराशितुल्यं बहुसाम्यं समुपैति सत्यवाक्यम् ॥ १७॥

सत्योक्ते ग्रहमिष्टं लिप्तिकृत्वा शतद्वयेनास्तम् ।
मण्डलभागविशुद्धेऽब्दाः स्युः शेषात्तु मासाद्याः ॥ १८॥

स्वतुङ्गवक्रोपगतैर्स्त्रसंगुणो द्विरुत्तमस्वाम्शकभत्रिभागगिः ।
इयान् विशेषस्तु मदन्तभाषिते समानमन्यत् प्रथमेऽप्युदीरितम् ॥ १९॥

किन्त्वत्र भांशप्रतिमं ददाति वीर्यान्विता राशिसमं च होरा ।
क्रूरोदये चोऽपचयः स नात्र कार्यं च नाब्दैः प्रथमोपदिष्टैः ॥ २०॥

सत्योपदेशो वरमत्र किन्तु कुर्वन्त्ययोग्यं बहुवर्गणाभिः ।
वाचार्यकं त्वत्र बहुघ्नतायामेकं तु शद् तदेव कार्शम् ॥ २१॥

अथ राश्मिजायुः ।

दशगोशरबाणाद्रिवसुसायकरश्मयः दिननायकमुख्येषु निजतुङ्गतेषु च ॥ २२॥

स्वोच्चोनमिष्टखचरं यदि षड्गृहोनं चक्राद्विशोध्य कृलिप्तकमंशुमानैः ॥

हत्वा भचक्रकलिकाहृतमच्द्पूर्वं रव्यादिरशिभजनितायुरिति ब्रुषन्ति ॥ २३

अथ रश्मेर्हरणम् ।

स्वराशिकुमतिसुहृत्गृहस्थे वक्रोपगे तद्राद्विगुणिकृताम्युः? ।
वक्रवसानेऽष्टमभागर्कज्यां सपत्नगे द्वादयभागहानिः ॥ २४॥

अस्तङ्गतेषु द्युचरेषु चार्द्धं हित्वा शानिं दानवपूजितं च ।
तद्राश्मियोगे ग्रहदत्तमायुर्महेन्द्रशास्त्रोदितमाहुरार्याः ॥ २५॥

अथ चक्रायुः ।

रव्यादिसप्तग्रहतारकांशभुक्तावशेषाब्दसमूहमायुः ।
सव्यापसव्योपगवाक्यजं वा वदन्ति चक्रायुरिनादिकानाम् ॥ २६॥

अथ दशायुः ।

आदित्यसुख्यनवखेचरयोगताराभुक्तावशिष्टघटिकाजनिवत्सराद्यम् ।
आयुर्दशाजनितमष्टकवर्गजातं यत्प्रोक्तमेव सकलं प्रवदन्ति तज्ज्ञाः ॥ २७॥

अथ बलोपेते शुभदृष्टेऽशसम्भवम् ।
रवौ पिण्डोद्भवं कुर्याच्चन्द्रे नैसर्गिकं क्रमात् ॥ २८॥

जच्चङ्गते रवौ चान्ये बलिष्ठाः केन्द्रकोणगाः ।
सर्वेषु स्वोच्चभावेषु बलिष्ठे शशहंसके ॥ २९॥

एवं चिरायुषां योगोष्वन्येषु गणितेषु च ।
चान्द्रयोगेषु त्र्ये तु चन्द्रे च बलसंयुते ॥ ३०॥

महापुरुषयोगेषु वीर्योत्कटयुतेषु च ।
राजयोगेषु सर्वेषु पैणड्यमाह पराशरः ॥ ३१॥

लग्ने गुरौ कर्मगते च भानौ चन्द्रे सुखे वाऽस्तगते बलाढ्ये ।
केन्द्रत्रिकोणोपचये च सौम्ये पापेष्चथापोक्लिमगेषु पैणड्यम् ॥ ३२॥

पैणड्यं भानौ निसर्गप्रभवमुडुपतौ रश्मिजं सोमपुत्रे
भौमे भिन्नाष्टवर्गोदितमसुरगुरौ कालचक्रोद्भवायुः ।
देवाचार्ये दशायुर्दिनकरतनये सामुदायं बलिष्टे

लग्ने यद्यंशकायुर्भवति बलयुते चाहुराचार्यमुख्याः ॥ ३३॥

अथायुषः पष्टीकरणम् ।

आयुरब्दादिकं सर्वं निश्चलेन गुणिकृतम् ।
मातङ्गेन हृतं लब्धं सौरमानायुरुच्यते ॥ ३४॥

आयुषोऽधिकारिणः ।

ये धर्ममार्गनिरता द्विजदेवभक्ता ये पथ्यभोजनरता विजितेन्द्रियश्च ।
येमानवाद्वृतिसत्कुलशीलसीमास्तेषामिदं कथितमायुरुदारधीभिः ॥ ३५॥

ये पापलुब्धाश्चोराश्च देवब्राह्मणनिन्दकाः ।
सर्वाशिनश्च ये तेषामकालमरणं नृणाम् ॥ ३६॥

धर्मे विकल्पबुद्धीनां दुःशीलानां च विद्विषाम् ।
ब्राह्मणानां च देवानां परद्रव्यापहारिणाम् ॥ ३७॥

भयङ्कराणां सर्वेषां मूर्खाणां पिशुनस्य च ।
स्वधर्माचारहीनानां पापकर्मोपजीविनाम् ॥ ३८॥

शास्त्रेष्वनियतानां च मूढानामपमृत्यवः ।
अन्येषामुत्तमायुः स्यादिति शास्त्रविदो विदुः ॥ ३९॥

अथ नानाजातीयमायुः ।

गृध्रोलुकशुकष्त्राङ्क्षसर्पाणां च सहस्रकम् ।
श्येनवानरमल्लुकमणडुकानां शतत्रग्रम् ॥ ४०॥

पश्चाशदुत्तरशवं राक्षसानां प्रकीर्तितम् ।
नराणां कुञ्जराणां  च विंशोत्तरशतं विदुः ॥ ४१॥

युत्रिंशदायुरश्वानां पश्चविंशत् खरोष्ट्रयोः ।
वृषमाहिषयोश्चैश्च चतुर्वशतिवत्सराः ॥ ४२॥

विंशत्यायुर्मयूराणां छागादीनां च षोडश ।
हंसस्य पङ्चनवकं द्वादशाब्दाः पिकाः शुकाः ॥ ४३॥

तद्वत्पारावतानां च कुक्कूटस्याष्टवत्सराः ।
बुद्बुदानामणडजानां सप्तसङ्गथाः समाः स्मृताः ॥ ४४॥

आरिष्टदशा ।

त्रिमणडलेष्वथैकस्मिन् पापस्तिष्ठति दुर्बलः ।
न सौम्यग्रहसंयुक्तस्तदशान्ते मृतिं वदेत् ॥ ४५॥

राशिसन्धिस्थखेटानां दशा रोगप्रदा भवेत् ।
त्रिंशद्भागमनुक्रान्तदशायां मरणं नृणाम् ॥ ४६॥

षष्ठाष्टमस्थो रिपुदृष्टमूर्त्तिः पापग्रहः पापगृहोपगश्चेत् ।
स्वान्तर्दशायां मरणं नराणां वदन्ति युद्धे विजितस्य दाये ॥ ४७॥

पङ्चम्यारदशा मृत्युं दद्यात्षष्ठी गुरोर्दशा ।
शनेश्चतुर्थी मृत्युः स्यादशा राहोस्तु पञ्चमी ॥ ४८॥

नीचारातिविमूढस्य विपत्प्रत्यारिनैधनाः ।
दशा दद्युर्मृतिं तस्यं पापयुक्ता विशेषतः ॥ ४९॥

तत्तद्भावार्थकामेशदशास्वन्तर्दशासु च ।
तत्तद्भावविनाशः स्यात् तद्युक्तेक्षितकारकैः ॥ ५०॥

अष्टमस्य त्रिभागांशपतिस्थितगृहं शनौ ।
तदीशानवभागर्क्षे गते वा मरणं भवेत् ॥ ५१॥

अथ च्छिद्रग्रहाः ।
रन्ध्रेश्वरो रन्ध्रयुक्तो रन्ध्रष्टा स्वरेश्वरः ।
रन्ध्राधिपयुतश्चैव चतुःषष्टयंशनायकः ॥ ५२॥

रन्ध्रे श्वरातिशत्रुश्च सप्त च्छिद्रग्रहाः स्मृताः ।
तेषां मध्ये बली यस्तु तस्य दाये मृतिं वदेत् ॥ ५३॥

तत्तद्भावाद्वपयस्त्थस्य तद्भावाधीश्वरस्य वा ।
वीर्योपेतस्य खेटस्य पाके मृत्युर्न संशयः ॥ ५४॥

अथ द्रेक्काणस्वरूपम् ।

कुलीरमीनालिगता दृगाणाः मध्यावसानप्रथमा भुजङ्गाः ।
अलिद्वितीयो मृगलेयपूर्वः क्रमेण पाशो निगडो विहङ्गः ॥ ५५॥

विलग्नजन्मद्रेक्काणाद्यस्तु द्वाविंशाति स्वरः ।
सुधाकरोपगांशर्क्षात् चतुःषष्ट्यंशको भवेत् ॥ ५६॥

अथ जीघदेहमृत्युसंज्ञाः ।

लग्नं पश्चहतं च मान्दिसहितं प्राणस्फुटं प्राणिनाम्
चन्द्रस्य स्फुटमष्टकेन गुणितं देहं समान्दिस्फुटम् ।
सप्तघ्नं गुलिकस्तुटं सह दिवानथेन मृत्युर्भवेत्
तस्माज्जीवकलेवरैक्यविपुले जातश्चिरं जीवति ॥ ५७॥

अथ निर्याणसमयाः

जीवमृत्युतनुयोगराशिगे गोचरेण रविजे धनक्षयः ।
तन्त्रिकोणगृहगेऽथवा नृणां तन्नवांशकयुते मृतिं वदेत् ॥ ५८॥

भावत्रिकोणगे मन्दे भावनाशं वदेद्बुधः ।
भावाधिपतिकोणे वा गुरौ प्राप्ते मृतिर्भवेत् ॥ ५९॥

लग्नार्कमान्दिस्फुटयोगराशेरधीश्वरो यद्भवनोपगस्तु ।
तद्राशिसंस्थे पुरुहूतवद्ये तत्कोणगे वा मृतिमेति जातः ॥ ६०॥

स्फुटे विलग्ननाथस्य विशोध्य यमकण्टकम् ।
तदेआशिवभागस्थे जीवे मृत्युर्न संशयः ॥ ६१॥

मान्दिस्फुटे भानुस्फुतं विशोध्य राश्यंशकोणे रविजे मृतिः स्यात् ।
धूमादिपङ्चग्रहयोगराशिद्रेक्काणयातेऽर्कसुते च मृत्युः ॥ ६२॥

मान्दिस्फुटोदितनवांशगतेऽमरेज्ये तद्द्वादशांशसहिते दिननाथसूलौ ।
द्रेक्कणकोणभवने दिनपे च मृत्युर्लग्नेन्दुमान्देयुतभेऽश॥ओदये स्यात् ॥ ६३॥

विलग्नमान्दिस्फुटयोगमांशं निर्याणमांसं प्रवदन्ति तज्ज्ञाः ।
निर्याणचन्द्रे गुलिकेन्दुयोगो लग्नं विलग्नार्क्किसुतेन्दुयोगम् ॥ ६४॥

गुलिकं रविसूनुं च गुणित्वा नवसङ्गयया ।
उभयोरैक्यराशगृहगे रविजे मृतिः ॥ ६५॥

षष्ठावसानरन्ध्रेशस्फुटैक्यभवनं गते ।
तत्रिकोणोपगे वाऽपि मन्द् मृत्युभयं नृणाम् ॥ ६६॥

जीवे नन्दहते विरिङ्चिगुणितं मन्दं च मान्दिस्फुटम्
संयोज्यं पुनरक्कवृद्धिभिनजं मन्दात्मजं योजयेत् ॥

तदेवेशपुरोहितस्फुटचयप्राप्तं नवांशं गते
जीवे गोचरगे यदि नृणां निर्याणकालो भवेत् ॥ ६७॥

भानुस्फुटे नवहते रविजं च मान्दिं हत्वा ग्रहैरतदिनराशिगणेषु योज्यम् ।
मान्दि पुनश्च नवकेन हतं च युञ्ज्यात् तद्राशिकांशगतपूषणि मृत्युकालः ॥ ६८॥

सुतेशसंयुक्तनभश्चराणाम् दशाब्दसङ्गया दिननायकाप्ताः ।
तच्छेषिते मासि मृतिं नराणां वदन्ति लग्नेशयुतग्रहैर्वा ॥ ६९॥

चन्द्रस्फुटे नवकसङ्गुणिते तु मान्दिं मन्दं च नन्दहतमिन्दुनियोजनीयम् ।
कृत्वा पुर्ननवहतार्कसुतं समेतं यत्तन्नवांशकशशी मरणप्रदः स्यात् ॥ ७०॥

जतोऽह्नि चेदर्कशानिस्फुटौक्यतारादिनिर्याणदशा प्रकल्प्या ।
तारेशराद्युस्फुटयोगतारापूर्वा दशाऽनिष्टकरा रजन्याम् ॥ ७१॥

अथ निर्याणहेतुः ॥

उदयाद्द्वाविंशतिकं द्रेक्काणं कारणं मृत्योः ।
तस्याधिपस्य निर्याणं सूच्येद्विधिवत्तमः ॥ ७२॥

ज्ञेया जन्मानि यन्नवांशकगतो मान्दिस्तदोयास्तके
राशौ तिष्ठति चेत् शुभस्तु बलवान् सौख्येन नूनं मृतिः ।
भूपुत्रे समरेण सूर्यतनये चोरादिभिर्दानवैः
सर्पाद्यैश्च तथा नृपभयात्क्षिणोडुपे तोशजात् ॥ ७३॥

रन्ध्रं येन निरीक्षितं बलवता तद्धातुकोपन्मृतिः
सूर्यादभ्रिजलायुधव्वरककक्षुत्तृट्कृतैश्चामयैः ।
लग्नादष्टमधामपे तनुगते कालस्य कालस्य यदेहजैः
छिद्राम्शे च चरस्थिरोभयगते देशान्तरे स्वे पाथि ॥ ७४॥

शून्यागारे रन्ध्राशौ बलिष्ठैरादित्याद्यैर्वीक्षिते स्वेचरेन्दैः ।

नो चेन् छिद्रस्थानयातैश्च नो चेत् तद्द्रेक्काणस्वामिना मृत्युमेति ॥ ७५॥

रव्यादिखेटनिजधातुभवामयेन जातस्तदीयखललींकरपीडया वा ।
रन्ध्रे शुभग्रहयुते तु विलापहेतुं सौख्येन मृत्युभुपयाति शुभोपयाते ॥ ७६॥

तुलायां रुधिरे प्राप्ते वृषभस्थे दिवाकरे ।
चन्द्रे मन्दगृहं प्राप्ते विणमध्ये मरणं भवेत् ॥ ७७॥

बलिना शानिना दृष्टे क्षीणेन्दौ निधनाश्रिते ।
गुदाक्षिरुकपीडया वा मृत्युः शस्त्रकृतो भवेत् ॥ ७८॥

लग्नाच्छिद्रत्रिकोणस्थैरर्कारार्किनिशाकरैः ।
मृत्युः स्याच्छैलपातेन वज्रकुढ्यादिभिश्च वा ॥ ७९॥

भौमारुणौ यदि परस्परराशियुक्तौ केन्द्रस्थितौ निधननावकखेचरेन्द्रात् ।
जातोऽघसानसमये क्षितिपालकोपात् शूलादिकायुधवरैनिधनं समेति ॥ ८०॥

चन्द्रे तनौ दिनकरे विबलेऽष्टमस्थे
लग्नाद्व्यये सुरगुरौ सुखगे च पापे ।
जातस्य तस्य शयनाच्च्युतहेतुमृत्युः
शस्त्रेण वा निशि निधादकृतेन वा स्यात् ॥ ८१॥

लग्नेशे निधनांशस्थे मूढे षष्ठगतेऽथवा ।
क्षुवाधया च मरणं बन्धुहीने महीतले ॥ ८२॥

आयुर्विलग्नाधिपती बलेन हीनौ धरासूनुरृणोशयुक्तः ।
युद्धे मृतिं तस्य वदन्ति तज्ज्ञाः शस्त्रेण जातस्य मृतिं विशेषः ॥ ८३॥

लग्नेश्वरे वाहननाथयुक्ते वागीश्वरेणापि युते त्वजीर्णात् ।
दारेश्वरे वाहनावित्तराशिनाथान्विते वा मरणं त्वजीर्णात् ॥ ८४॥

भुक्त्यंशपो भानुसुतेन युक्तो दुःस्थानगो वा विषभक्षणे ।
सहार्हना वा शिखिना च तस्य मृत्युर्भवेद्रज्जुनिबन्धने ॥ ८५॥

पिशाचपीडाऽग्निजले विपत्स्याद्भौमहिमन्दान्यतमेन युक्त ।
क्षीणे शशाङ्के निधनस्थिते च दुःस्थे त्वपस्मारभयान्मृतिः स्यात् ॥ ८६॥

रन्ध्रस्यानगते सूर्ये भौमे वा बलवजिते ।

वित्ते पापग्रहैर्युक्ते पित्तरोगान्मृतिं वदेत् ॥ ८७॥

जलराशिगते चन्द्रे चाष्टमस्थेऽथवा गुरौ ।
पापग्रहेण संदृष्टे क्षयरोगान्मृतिं वदेत् ॥ ८८॥

अष्टमस्थानगे शुक्रे पापग्रहनिरीक्षिते ।
वातरोगात्क्षयाद्वाऽपि प्रमेहाद्वा मृतिं वदेत् ॥ ८९॥

सूर्यस्थानगते सौम्ये पापग्रहनिरीक्षिते ।
त्रिदोषान्मरणं विन्द्याज् ज्वररोगेण वा वदेत् ॥ ९०॥

मृत्युस्थानगते राहौ पापग्रहनिरीक्षिते ।
पिटकाद्युष्णरोगाद्वा सर्पदोषान्मृतिर्भवेत् ॥ ९१॥

पराभवगते राहौ पापग्रहनिरीक्षिते ।
मसूरिकादिरोगाद्वा पित्तभ्रंशान्मृतिं वदेत् ॥ ९२॥

अथ हस्तादिविच्छेदयोगाः ।

धर्मे शनौ चाथ गुरौ तृतीये करच्छिदः स्याग्निधने व्यये वा ।
कर्मस्थिताश्चेद्यदि राहुन्मन्दसौम्याः करच्छेद्युतोऽत्र जातः ॥ ९३॥

शुक्रेण दृष्टे यदि रन्ध्रनाथे सूर्ये शनौ वा फाणिनाथयुक्ते ।
क्रूरादिषष्ट्यंशसमन्विते वा विच्छेदनं तच्छिरसो वदन्ति ॥ ९४॥

मन्दे विलग्ने मदने सराहौ कन्यान्विते भार्गवनन्दने च ।
क्षीणे शशाङ्के मदराशियुक्ते विच्छिन्नहस्तश्च पदेन सार्द्धम् ॥ ९५॥

भूसूनुलग्ने यदि वा तदंशे सूर्यान्विते कृष्णानिशाकरे तु ।
फणीशचन्द्रात्मजसंयुतेऽर्कराशौ यदा तर्ह्युदरप्रभेदम् ॥ ९६॥

मन्दोदये सौम्यदृशा विहीने सर्पार्कयुक्ते यदि कृष्णचन्द्रे ।
नाभिप्रवेशोदरभेदमाहुः शस्त्रेण जातस्य प्राशराद्याः ॥ ९७॥

अथ दुर्मरणयोगाः ।

षष्ठाष्तमव्यये चन्द्रे लग्ननाथेन वीक्षिते ।
मन्दमान्द्यगुसंयुत्के तस्य दुर्मरणं वदेत् ॥ ९८॥

मेषुरणस्थे यदि चित्रभानौ भौमे चतुर्थे न च सौम्युयुक्ते ।
सौम्ये विलग्नोपगते तु मृत्यु गोशृङ्गतः शूलनिपाततो वा ॥ ९९॥

दशमसुखसमेतैः पापदृष्टैश्च सयम्यै-
रुदयनिधनयातैः शूलपातान्मृतिः स्यात् ।
शशिनि तनुगृहस्थे बन्धुगे न्भानुपुत्रे
कलहजनितदोषैरम्बरस्थे च भौमे ॥ १००॥

लग्नं गते दिनकरे तरुणीगतेन्दौ पापेक्षिते कलहतोयभयान्मृतिः स्यात् ।
लग्ने दिनेशशशिनौ द्विशरीरकेऽन्ये पापेक्षिता यदि बहुदकशृङ्गदष्टात् ॥ १०१॥

तुहिनकिरणलग्नात् पापखेटोपयाते नवमतनयराशौ पापखेटेक्षिते वा ।
भुजगनिगडपाशे रन्ध्रजन्मत्रिमागे जननसमयलग्नान्मृत्युद्बन्धनेन ॥ १०२॥

मीनोदये शशिरवी यदि पापयुक्तो पापेऽष्टमे च मरणं रभणीकृतं स्यात् ॥

भौमे सुखे दिनकरे यदि वा मदस्थे मन्देऽष्टमे शशिनि चान्नविशेषजन्यम् ॥ १०३॥

मन्दे धने सुखगते शशिनि क्षमाजे मानस्थिते व्रणकृतेन मृतिं समेति ।
बन्धुस्थेऽवनिसुते धनगे शशाङ्के भानौ नभस्थलगते तु गजाश्वयानात् ॥ १०४॥

रन्ध्रे शनौ वियति हीनबले शशङ्के भानौ सुखे निभृतकाष्ठहतेन मृत्युः ।
पापान्तरे जनलग्नपतौ सकेतौ लग्नाष्तमे खलयुते साति मातृकोपात् ॥ १०५॥

सुखास्प्दस्थैरशुभैर्ग्रहेन्दैस्त्रिकोणगैर्वाऽथ विलग्नराशौ ।
रन्ध्रेश्वरे भूतनयेन सार्द्ध उद्बन्धनात्तस्य मृतिं वदन्ति ॥ १०६॥

लग्ने रवौ सुते मन्दे रन्ध्रस्थे तृडुनायके ।
धर्म गते धरासूनौ वृक्षाशबिभयान्मृतिः ॥ १०७॥

पापेष्वाज्ञाबन्धुराशिस्थितेषु क्षीणे तारान्गयके शत्रुराशौ ॥

लग्नाच्छिद्रस्वानराशि गते वा यात्राकाले शत्रुदोषान्मृतिः स्यात ॥ १०८॥

लग्नान्त्यगौ भानुधराक्रमारौ दिनेशचन्द्रेन्दुसुता मदस्थाः ।
सुरालथोद्यानवनप्रदेशे प्रवासभूमौ भ्रियते तु जातः ॥ १०९॥

लग्नाष्तमे पापयुतेऽष्टमेशे रिःफोपयाते यदि केन्द्रगे वा ।
लग्नेश्वरे हीनबलेन युक्ते दुर्मार्गदोषात्प्रवदन्ति मृत्युम् ॥ ११०॥

भौमार्कजक्षेत्रगते शशाङ्के पापेक्षिते पापखगान्तरस्थे ।
कन्यागृहे वा हिबुकोपयाते मृतिं वदेदग्निजशस्त्रपातैः ॥ १११॥

यादि विषघटिकायामष्टमे पापयुक्ते विंषशिखिभवसस्त्रैर्जायते तस्य मृत्युः ।
बहुदिविचरयुक्ते लग्नपे साष्टमेशे बहुजनमृतिकाले मृत्युमेति प्रजातः ॥ ११२॥

लग्नेशस्थनवांशस्य राशिकोपोद्भवामयैः ।
मृत्युं तस्य वदन्त्येके हौरिका मुनिपुङ्ग्रवाः ॥ ११३॥

होरेशऽशगते तु तुम्दुरगृहे तापस्वराग्न्युद्भवै-
रूक्षे श्वासविकारशूलजनितैर्युग्मे शिरशूलजैः ।
वातोन्मादमवैः कूलीरभवने सिंहे विषस्फोटकैः
कन्यवां जठराम्निगुह्यजनितैर्जातस्य मृत्युं वदेत् ॥ ११४॥

जूकेशोकचतुष्पदज्वरभषैः कीटेऽस्मशस्त्रादिभि-
चापे तीव्रमरूद्भषैर्मृगसुखे ज्वाघ्रादिशूलामयैः ।
कुम्भे ज्याघ्रवधूकृतैरनिभिषे तोयातिसायिर्मृतिम्
संघ्रस्थांशगता प्रचारधरणी जातस्य मृत्युप्रदा ॥ ११५॥

अथ बिर्याणदिग्ज्ञनानम् ।

निशि बलयुतराशौ लग्नयातेऽह्निकाले
यदि दिनबलयुक्ते जन्मलग्ने रजन्याम् ।
उदयगनवभागे स्वामियोगेक्षितानाम्
दिशि मृतिमुपयाति स्थानवीर्याधिकस्य ॥ ११६॥

अथ मोहकालः शषपरिणामश्च ।

होरशेषनवांशमानघटिका मोहः स्वभांशेक्षिते
पापैस्तद्द्विगुणीकृतस्त्रिगुणितः सौम्यैरवस्थात्मकः ।
क्रूरापश्वरसौम्यमिश्रतनुगैर्द्वाविंशतित्र्यंशकै-
र्न्नशं याति शशीरमग्निजलसंभिश्रश्चमुख्यैः क्रमात् ॥ ११७॥

अथ मरणानन्तरं गतिज्ञनम् ।

देवमर्त्यपितृनारकालयप्राणिनो गुरुरिनक्षभासुतौ ।
कुर्युरिन्दुभृगुजौ बधार्कजौ मृत्युकालभवलग्नगा यदि ॥ ११८॥

भूश्चक्रं स्यात् तुम्बुराद्यं चतुष्कं सिंहागाराद्यं भुवश्चक्रमाहुः ।
चापादिस्थं तत्सुवश्चक्रजन्यं जीवो मृत्युक्षेत्रलोकं समेति ॥ ११९॥

रिःफाधीशे पापषष्ट्यंशयाते पापैर्दृष्टे नारकं लोकमेति ।
राहौ रिःफे मान्दिरन्ध्रेशयुक्ते शत्रुस्थानस्वामिदृष्टे तथा स्यात् ॥ १२०॥

उच्चस्थे शुभखेचरे व्ययगते पापग्रहैः शोभनैः
सन्दृष्टे शुभवर्गके च विपुलं स्वर्गादिभोगं वदेत् ।
कर्मस्थानपतौ पुरन्दरगुरौ रिःफोपयातेऽथवा
सौम्यव्योमनिवासदृष्टिसहिते तस्यामरत्वं भवेत् ॥ १२१॥

बृहस्पतौ चापनवांशकस्थे बलान्विते कर्कटलग्नयाते ।
त्रिभिश्चतुभिः सह कण्टकेषु नभश्चरैर्ब्रह्मपदं प्रयति ॥ १२२॥

धनुविलग्ने यादि तुम्बुरांशके लग्ने गुरौ दानवपूजितेऽस्तगे ।
कन्यागते शीतकरे बलान्विते परं पदं लोकमुपैति शावतम् ॥ १२३॥

अध्यायोपसंहारः

निसर्गदायप्रमुखायुरब्दस्फुटक्रियामृत्युदशाप्रभेदाः ।
निर्याणकालप्रभवाश्च सर्वे सक्कीर्तिता भानुमुखप्रसादात् ॥ १२४॥

इति क्षीनवप्रहकृपया वैद्यनाथविरचिते जातकपारिजाते
आयुर्दायाध्यायः पङ्चमः ॥ ५॥

अथ जातकभङ्गाध्यायः ॥ ६॥

तत्रादौ जातकभङ्गपरिभाषा ।

केचिद् योगा राजयोगस्य भङ्गाः केचिद्रेका नाम दारिद्र्ययोगाः ।
केचित्प्रेष्याः के च केमद्रुमाख्यास्ते चत्वारो जातभङ्गाकराः ॥ १॥

राजभङ्गाः ।

मेषे जूकनवांशके दिनकरे पापेक्षिते निर्धनः
कन्याराशिगते यदा भृगुसुते कन्यांशके भिक्षुकः ।
नीचर्क्षे त्वातिनीचभागहिते जातो दिवानायके
राजश्रेष्ठकुलाग्रजोऽपि विगतश्रीपुत्रदाराशनः ॥ २॥

मन्दाराहिसमन्वितेऽमरगुरौ शुक्रेन्दुपुत्रेक्षिते
जातः शूद्रकलेवरोऽपि निखिलां विद्यामुपैति श्रियम् ।
तारानाथविकर्तनौ गदगतौ सौरेण संवीक्षितौ
जातोऽसौ समुपैति नीचविहितोपायेन सञ्जीवनम् ॥ ३॥

केन्द्रस्थे वा विलग्ने दिनकरतनये सौम्यखेतैरदृष्टे
भूसूनोः कालहोरासमयजमनुजो भिक्षुको दासभूतः ।
सौम्यादृष्टेऽर्क्किदृष्टे शशिनि सरुधिरे मेषगे भिक्षुकः स्या-
दर्क्कीन्द्वर्क्कैः सकेन्द्रैर्जडतनुरधनश्चान्यभुक्ताशनः ॥ ४॥

मन्दे केन्द्रगते विलग्नगृहगे चन्द्रेऽन्त्यभे वाक्पतौ
जातो भिक्षुक एव शोकजलधौ भग्नो विदेशं गतः ।
धर्मस्थानपतौ तु रिःफगृहगे पापग्रहे केन्द्रगे
जातः पापरतः परन्नधनभुग् विद्याविहीनो भवेत् ॥ ५॥

जीवे रहुयुतेऽथवा शिखियुते पापेक्षिते नीचकृन्
नीचे नीचसमीक्षिते सुरगुरौ विप्राऽतिदुष्कर्मकृत् ।
निद्री चन्द्रविलग्नपौ सह दिवानाथेन मन्देक्षितौ
प्रेष्यः स्यादशुभैः शुभग्रहदृशा हीनैश्च मानस्थितैः ॥ ६॥

भागुएशेऽन्त्यगते सहादरगतैः पापैर्व्ययेशेऽर्थगे
दुर्भोजी परिबन्धनादिसहितो जातोऽन्यजायारतः ।
सर्वैर्नीचसपत्नभागाहितैः कर्मेतस्थानगै-
र्विद्याबुद्धिकलत्रपुत्ररहितः कोपी सदा भैक्षकृत् ॥ ७॥

लग्नस्वामिनि रिःफगे तु वियति क्रूरे सचन्द्रे कुजे
जातोऽसौ परदेशगः सुखधनत्यागी दरिद्रो भवेत् ।
होराजन्मपती न शोभन्युतावस्तंगतावन्त्यगे
भाग्येशे यदि नष्टदारतनयो जातः कुलध्वंसकः ॥ ८॥

सौम्यासौम्ययुतेषु केन्द्रभनेष्विन्दौ तनुस्वामिना
दृष्टे मन्दनवांशके सति कुलध्वंसी विदारात्मजः ।

कामेबोधनशुक्रयोः सुतगृहे जीवे सुखस्थे शुभे
पापे रन्ध्रगते च चन्द्रभवनाज्जाताः कुलध्वंसिनः ॥ ९॥

चरावसाने शशिनि स्थिरादौ द्विदेहमध्ये बलवर्जिते च ।
हीने विलग्ने यदि केचरेन्द्रैर्विनाशमेति क्षितिपालयोगात् ॥ १०॥

लग्नराशिनवभावनायका भानुशीतकरदेवपूजिताः ।
शत्रुभागसहिताः स्वनीचभस्वामिभांशसहिताः परानुगः ॥ ११॥

शशिनि गगनआते कामगे दानवेज्ये नवमभवनयाते पापखेटे कुलघ्नः ।
भृगुजशशिजचन्द्राः केन्द्रगा जन्मलग्ने तमसि विहितकर्मध्वंसको नीचतुल्यः ॥ १२॥

नीचे भ्रिगौ म्न्दनवांशके वा दुःथानगे भानुसुतेक्षिते च ।
कामस्थिते शीतकरे सभानौ मात्रा सह प्रैष्यभुपैति नित्यम् ॥ १३॥

नीचे गुरौ वासर्नायके वा केन्द्रस्थिते पापयुते शिशुघ्नः ।
केन्द्रे सपापे शुभदृष्टिहीने रन्ध्रे गुरौ गोमृगजातिहन्ता ॥ १४॥

शशाङ्कसौम्यौ दशमोपयातौ पापेक्षितौ पापसमन्वितौ च ।
नीचांशगौ सौम्यदृशा विहीनौ जातस्तु नित्यं खलु पक्षिहन्ता ॥ १५॥

चन्द्रात्सुते लग्नपतौ धने वा सौम्येतरेष्वष्टमराशिगेषु ।
मानस्थिते शीतकरे तदग्नी जातस्तु जीवत्यतिहेयवृत्त्या ॥ १६॥

नीचारिभांशौ भृगुदेवपूज्यौ तदंशके वासरनाथपुत्रे ।
जातः सुदुःखःसुतदारहीनः कृच्छ्रेण संजीवति भाग्यहीनः ॥ १७॥

सर्वे पापाः केन्द्रनीचारिसंस्थाः सौम्यर्दृष्टा रिःफरन्ध्रारियातः ।
निघ्नत्येते राजयोगं् ग्रहेन्द्रा नीचारातिक्रूरषष्ठ्यंशकाश्च ॥ १८॥

केन्द्रस्थिता मन्दनिशाकरार्काः शुभैरदृष्टा यदि मद्यपायी ।
क्रूरारिषष्ठ्यंशकनीचभागा दुष्कर्मयुक्तोऽन्यकलत्रगामी ॥ १९॥

नीचे भृगौ धर्मगते सपापे द्विजप्रहर्ता यदि पापदृष्टे ।
व्यये शुभर्क्षेऽर्कसुतांशकस्थे भृगौ च दासीवरनन्दनः स्यात् ॥ २०॥

अथ रेकायोगाः ।

लग्नेशे बलवर्जिते परिभवस्थानाधिपेनेक्षिते
सूर्योच्छन्नकरे पुरन्दरगुरौ रेकाख्ययोगो भवेत् ।
बन्धुस्थानप्संयुतांशकपतौ तिग्मांशुलुप्तद्युतौ
रिःफेशेन निरीक्षिते सति यदा योगस्तु रेकाडयः ॥ २१॥

षष्ठस्वामिनिरीक्षिते सुखपतौ रन्ध्रेशयुक्ते तथा
मानेशे सुतगे विलग्नरमणे नीचं गते रेकभाक् ।
रन्ध्रारिव्ययराशिगा यदि शुभाः केन्द्रत्रिकोणोपगाः
पापा लाभगृहाधिपे च विबले रेकाभिशस्तो भवेत् ॥ २२॥

होरशः खलसंयुतः सित गुरु चास्तं गतौ तद्वदेद्
बन्धुस्थानपतिः शुभेतरयुतश्चास्तं गतो रेकदः ।
भाग्यस्थानपतौ विकर्तनकरच्छन्ने विलग्नाधिपे
नीचस्थे धनपे च नीचगृहगे रेकाभिधानो भवेत् ॥ २३॥

नीचस्था यदि वा दिनेशाकिरणच्छन्नास्त्रयो लग्नपे
दुष्टस्थानगतेऽथवा गतब्ले योगस्तु रेकप्रदः ।
होरावित्तनवास्पदायसुखधीकामानुस्थाः खला-
स्तस्यायुर्नवभागरेकफलदा नीचारिपापेक्षिताः ॥ २४॥

एकद्विकत्रिकस्वलग्नचरा नराणां कल्पेस्वेविक्रमगताः परतस्तथैव ।
आदौ तु मध्यवयसि क्रमशस्तदन्त्ये रेकप्रदाः रिपुस्वलग्नहनीचदृष्टाः ॥ २५॥

रेकायोगफलम् ।

निर्विद्यो विधनो दरिद्रसहितो रेकोद्भवः कामुकः
क्रोधी दुःखितमानसो रुचिकरः सौभाग्यहीनः पटुः ।
भिक्षाशी मलिनो विवादनिरतो मात्सर्यरोपान्वितो
देवब्राह्मणदूषकः प्रतिदिनं दारात्मजैर्निदितः ॥ २६॥

दुष्टात्मा कुनखी कुमर्गनिरतो अभागायोगान्वितो
बन्धूनामपकारदूषणपर्ः स्वल्पाधुराभिक्षुकः ।
मृकोऽन्धो बधिरः प्रमत्तहृद्यः कामाहुरो रोषवाण्
पङ्गुर्नेत्रविकारभावसहितो रेकोद्भवः स्यान्नरः ॥ २७॥

अथ दरिद्रयोगाः ।

भाग्येश्वरादतिबलो निधनेश्वरो वा लग्नाधिपस्त्रिदशनाथगुरुर्यदि स्यात् ।

केन्द्राद्बहिर्दिनकरस्य करामितप्तो लाभाधिपो यदि विहीनबलो दरिद्रः ॥ २८॥

लाभारिव्ययरन्ध्रपुत्रगृहगा जीवारमन्देन्दुजा
नीचस्थानगता यदा रविकरच्छन्नास्तदा भिक्षुकः ।
भाग्यस्थानगतो दिनेशतनयः सौम्येतरैरीक्षितो
लग्नस्थः शशिनन्दनो रवियुतो नीचांशगो भिक्षुक ॥ २९॥

जीवज्ञशुक्ररविनन्दनभूमिपुत्रा रन्ध्रारिरिःफसुरकर्मगता यदि स्यात् ।
लग्नेश्वरादतिबली व्ययभावनाथो नीचस्थितो रविकराभिहितो दरिद्रः ॥ ३०॥

शुक्रार्यद्विजराजभूमितनया नीचस्थिता जन्मनि
व्योमाये नवमे कलत्रतनये जातो दरिद्रो भवेत् ।
लग्ने दानवपूजितेऽमरगुरौ पुत्रे धरानन्दने
लाभे रात्रिकरे तृतीयभवने नीचं गते भिक्षुकः ॥ ३१॥

लग्ने चरे चरनवांशगतेऽसितेन दृष्टे च नीचगुरुणा यदि भिक्षुकः स्यात् ।
जातो विनाऽमरपुरोहितलग्नराशि जीवे रिपुव्ययगते तु भवेद्दरिद्रः ॥ ३२॥

जातः स्थिरे लग्नगते तु पापाः केन्द्रत्रिकोणोपगताश्च सर्वे ।
केन्द्राद्बहिःस्थानगतास्तु सौम्या भिक्षाशनः स्यात्परपोषितश्च ॥ ३३॥

चरे विलग्ने निशि सौम्यखेटस्त्रिकोणकेन्द्रोपगता नवीर्याः ।
स्वलग्नहाः केन्द्रबहिःस्थिताश्चेद् भिक्षाशनं नित्यमुपैति जातः ॥ ३४॥

पापा नीचस्थानगाः पापकर्मा, सौम्या नीचस्थानगा गूढपापः ।
जीवे नीचस्थानगे कर्मराशौ, नीचे भौमे मन्दनस्थे तथैव ॥ ३५॥

नीचांशगस्तुङ्गगृहोपयाता जातस्य नीचं फलमाशु दद्युः ।
नीचङ्गतास्तुङ्गनवांशकस्थाः सौम्यं फलं व्योमचराः प्रकुर्युः ॥ ३६॥

अथ दरिद्रयोगफलम् ।

निर्भाग्यो विलएन्द्रयो विषमढीर्दारात्मजैर्निन्दतो
भिक्षाशी विषमस्थितो विषमवाक् शिश्नोदरे तत्परः ।
अन्यायर्जनतत्परस्त्वनुदिनं मात्सर्यवाक् कण्टकी
नित्यं त्यात्परदारसक्तहृदयो नीचोऽन्धमूको जडः ॥ ३७॥

दारिद्रयोगे कलहप्रियः स्यात् कुष्टी परेषां हिरहृत् कृतघ्नः ।

वाचालको भूसुरभक्तिहीनः कुदारयुक्तः कुनस्वी च जातः ॥ ३८॥

अथ प्रेष्ययोगाः ।

माने रवौ मन्मथगे निशीशे गेहे शनौ सोदरगे धराजे ।
लग्ने चरे देवगुरौ धनस्थे जातो निशायां परकार्यकृत्स्यात् ॥ ३९॥

धर्मे भृगौ कामगते मृगाङ्के वाचस्पतौ वित्तविलग्नपे वा ।
रन्ध्रस्थिते भूतनये च कीर्त्या लग्ने स्थिरे प्रेष्यभवा भवन्ति ॥ ४०॥

प्रेष्यश्चरोदयपतौ निशि सन्धियाते केन्द्रस्थिते यदि प्खलद्युच तु जातः
मन्देन्दुजीवभृगुजा दिवि केन्द्रकोणे सन्धिस्थिताः स्थिरविलग्नयुते तथा स्यात् ।

ऐरावतांशेन्द्रगुरौ ससन्धौ शीतद्युतौ चोत्तमवर्गयुक्ते ।
केन्द्राद् वहिःस्थे निशि कृष्णपक्षे शुक्रे विलग्ने परकर्मजीवी ॥ ४२॥

प्रेष्यो भवेदरिसुखास्पदसन्धियाता भूपुत्रदेवगुरुवासरनायकाश्चेत् ।
पापांशके शशिनि शोभनराशियुक्ते जीवे विलग्नपयुतेपरकार्यकृत्स्यात ॥ ४३॥

मृगाननस्थे पुरुहूतवन्द्ये सपत्नभावाष्टमरिःफराशौ ।
रसातलस्थे हिमगौ विलग्नाज्जातः परप्रेष्यमुपैति नित्यम् ॥ ४४॥

अथ प्रेष्ययोगफलम् ।

पापात्मा कलहप्रियः काठिनवाह् भूदेवतादूषको
विद्याभाग्यविहीनदुष्टरसिको मात्सर्यकोपान्वितः ।
मिथ्यावादविनोदवङ्चनरतः शिश्नोदरे तत्परः
कारुण्यास्थिरमानभङ्गिचतुरो योगे परप्रेष्यके ॥ ४५॥

अथ अङ्गहीनयोगाः ।

मेषे वृषे चापधरे विलग्ने विकारदन्तो यदि पापदृष्टे ।
मन्दे मन्दस्थेऽहियुते कुजे वा बलैर्विहीनेऽङ्गविहीनवान् स्यात् ॥ ४६॥

लग्नाद्दशमगश्चन्द्रः सप्तमस्थो धरासुतः ।
द्वितीयस्थानगो भानुरङ्गहीनो भवेन्नरः ॥ ४७॥

त्रिकोणगे ज्ञे विबलैस्ततोऽपरैर्मुखाङ्घ्रिहस्तैर्द्विगुणैस्तदा भवेत् ।

अवाग्गवीन्दावशुभैर्भसन्धिगैः शुभेक्षिते चेत् कुरुते गिरं चिरात् ॥ ४८॥

सौम्यर्क्षाशे रविजरुधिरौ चेत् सदन्तोऽत्र जातः
कुब्जः स्वर्क्षे शशिनि तनुगे मन्दमाहेयदृष्टे ।
पङ्गुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे
सन्धौ पापे शशिनि च जडः स्यान्न चेत्सौम्यदृष्टिः ॥ ४९॥

सौरशशाङ्कदिवाकरदृष्टे वामनको मकरान्त्यविलग्ने ।
धीनवमोदयगैश्च दृगाणैः पापयुतैरभुजाङ्घ्रिशिराः स्यात् ॥ ५०॥

लग्नद्रेक्काणगो भौमः सौरसूर्येन्दुवीक्षितः ।
कुर्यद्विशिरसन्तद्वत् पङ्चमे बाहुवर्जितम् ॥ ५१॥

रविशशियुते सिंहे लग्ने कुजार्किनिरीक्षिते
नयनरहितः सौम्यासौम्यैः सबुद्बुदलोचनः ।
व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रवि-
र्न शुभगदिता योगा याप्या भवन्ति शुभेकिताः ॥ ५२॥

शूरः स्तब्धो मध्यदृष्टिर्विलग्ने मेषे स्वोच्चे रोगदृक् सिंहगेऽर्के ।
रात्रावन्धस्तौलिगे निर्द्धनी स्यात् कर्किण्यर्के लग्नगे बुद्बुदाक्षः ॥ ५३॥

व्यये रवीन्दूयुगपत् पृथक्स्थौ नेत्रे हरेतामपसव्यसव्ये ।
षट्छिद्रगाश्चाक्षि हरन्ति सव्यं रिपौ दक्षिणमष्टमस्थाः ॥ ५४॥

विकर्तनो लग्नगतोऽस्तगो वा दिनेशपुत्राभियुतेक्षितश्चेत् ।
तस्येक्षणं दक्षिणमाशु हन्यादहीक्षमासूनुयुतस्तु वामम् ॥ ५५॥

दिनेशचन्द्रौ यदि रिष्फयातौ सपत्नरन्ध्रव्ययगास्त्वसौम्याः ।
हन्यादरिस्थो नयनं हि वामं रन्ध्रस्थितो दक्षिणभागनेत्रम् ॥ ५६॥

कुजे धनेशे निधने रवीन्द्वोः शत्रुव्ययस्थानगते,अर्कजेऽन्धः ।
रन्ध्रावसानारिते शशाङ्के शनौ सभौमे यदि नष्टनेत्रः ॥ ५७॥

षष्थे चन्द्रेऽष्टमे भौमे लग्नादन्त्यगतेऽर्क्कजे ।
वित्तस्थानगते भौमे शक्रोऽप्यन्धो भवेद् ध्रुवम् ॥ ५८॥

लग्नेश्वरेण सहिते यदि चित्तनाथे दुःस्थेऽक्षिनाशनमथास्फुजिदिन्दुयुक्ते ।
नेत्रेश्वरे तनुगते यदि नैशिकोऽन्घः स्वोच्चे शुभग्रहयुते न तथा वदन्ति ॥ ५९॥

अथ रोगयोगाः ।

राहौ विलग्ने सकुजेऽर्कपुत्रे साहौ बृहद्वीजमिवाहुएआर्याः ।
लग्नेश्वरे मृत्युगते सराहौ रन्ध्रे समान्दौ च तथैव वाच्यम् ॥ ६०॥

लग्ने सराहौ गुलिके त्रिकोणे रन्ध्रे कुजे मन्दयुते तथैव ।
लग्नेश्वराक्रन्ततदंशनाथे राह्वारमान्द्यादियुते तथैव ॥ ६१॥

लग्ने रवौ भूमिसुतेन दृष्टे गुल्मक्षयश्वासनिपीडितः स्यात् ।
भौमे विलग्ने शानिसूर्यदृष्टे वसूरिरोगाभिहतो मनुष्यः ॥ ६२॥

पापेक्षिते रविसुते धनराशियुक्ते पापान्विते शुनकभीतिमुपैति मर्त्यः ।
तद्भावनाथसहिते दिननाथपुत्रे दृष्टेऽथ वा शुनकभीतिमुपैति जातः ॥ ६३॥

वीर्यान्विते राहुसमेतराशिनाथान्विते राहुयुते विलग्ने ।
सर्पाद् भयं विक्रमराशिनाथे बुधेन युक्ते गलरोगमेति ॥ ६४॥

नीचे तृतीयेऽरिगृहे विभूढे पापेक्षिते तद्गलरोगवान् स्यात् ।
विषप्रयोगाद्विषभक्षणाद्वा तेषामभावेऽर्थविनाशनार्थः ॥ ६५॥

पापे तृतीये लग्नरोगमत्र वदन्ति चान्द्रादियुते विशेषात् ।
भौमान्विते प्रेतपुरीशसूनौ तृतीयराशौ यदि कर्णरोगम् ॥ ६६॥

पापेक्षिते सोदरभे सपापे कर्णोद्भवं रोगमुपैति जातः ।
क्रूराविषष्ट्यंशयुते तदीशे कर्णस्य रोगं कथयन्ति तज्ज्ञाः ॥ ६७॥

पैतोल्बणं याति रवौ रिपुस्थे पापेक्षिते पापमन्विते च ।
भानौ सरन्ध्रे विबले धराजे पापे धनस्थे तु तथैव वाच्यम् ॥ ६८॥

श्लेष्माभयं बुधयुतेऽवनिजे रिपुस्थे क्रुरांशके यदि सितेन्दुसमीक्षिते च ।
पापेक्षितेऽवनिसुते निधनोपयाते केतौ धनाष्टमगते व्रणरोगमेति ॥ ६९॥

षष्ठेश्वरे पापयुते विलग्ने रन्ध्रस्थिते वा व्रणयुकशरीरः ।
कर्मस्थिते तादृशखेचरेन्द्रे व्रणाक्कितः स्याच्छुभदृग्विहीने ॥ ७०॥

लग्नेशभूपुत्रशशाङ्लपुत्राः सह स्थितः सौम्यतरान्य्भावाः ।
अपानरोगं स्व्थवाऽपवित्रं पश्यन्ति षष्ठं मुनयो व्दन्ति ॥ ७१॥

लग्नेशषष्ठाधिपती दिनेशयुक्तौ ज्वरं चन्द्रसमन्वितौ चेत् ।
जलप्रमादं क्षितिसूनुयुक्तौ युद्धेन वा स्फोटकराशिभिर्वा ॥ ७२॥

पित्तात्प्रमादं यदि सौम्ययुक्तौ निर्व्याधिकः सूरसमन्वितौ चेत् ।
शुक्रेण भार्याविपदं वदन्ति मन्देन नीचानिलरोगमाहुः ॥ ७३॥

सराहुकेतु यदि सर्पपीडां चोरादिभिर्भीभिर्तिमुपैति जातः ।
केन्द्रत्रिकोणे यदि साहिकेतू वदन्ति तज्ज्ञा निगलं तदानीम् ॥ ७४॥

षष्ठेश्वरश्चन्द्रसुतेन युक्तः सागुविलग्ने स्वयमत्र शिश्नम् ।
छिनत्त्यसौ सौम्यदृशा विहीनः सभूमिपुत्रो यदि लिङ्गरोगी ॥ ७५॥

कामेश्वरः शुक्रयुतो रिपुस्थः कलत्रषण्ढत्वभुदीरयन्ति ।
षष्ठेशलग्नाधिपती समन्दौ केन्द्रत्रिकोणे यदि बन्धनं स्यात् ॥ ७६॥

चरे विलग्ने रिपुनाथदृष्टेकुजे च लाभे स्थिरगे च धर्मे ।
द्वन्द्वेऽस्तराशौ प्रवदेन्नराणां रोगं रिपूणां कृतमाभिचारम् ॥ ७७॥

जीवे समन्दे दशमेअर्धचन्द्र् वैकल्यभङ्गे क्षितिजे कलत्रे ।
दिनेशचन्द्रौ रविराशियुक्तौ चन्द्रर्क्षगौ वा यदि शोषणं स्यात् ॥ ७८॥

लग्ने रवौ भूमिसुते कलत्रे सून्मादभाक् तत्र नरो हि जातः ।
उन्मादबुधिं समुपैति लग्ने शनौ कलत्रे सकुजे त्रिकोणे ॥ ७९॥

लग्नत्रिकोणे दिननाथचन्द्रौ शौर्ये गुरौ केन्द्रसमन्विते वा ।
सोन्मादबुद्धिः स भवेत्तदानीं शरासनादौ यदि जन्मलग्ने ॥ ८०॥

कन्द्रस्थितौ सौम्यनिशाक्रौ वा सौम्यांशहीनौ भ्रमसंयुतः स्यात् ।
केन्द्रस्थिता मन्दनिशाकरार्का जडो भवेदत्र मधूपभोक्ता ॥ ८१॥

कुलीरकुम्भालिनवांशयुक्ते चन्द्रे समन्दे यदि गुह्यरोगी ।
चन्द्रे सुखे तद्भवनांशयुक्ते पापान्विते स्याद्यदि कुण्ठरोगी ॥ ८२॥

चन्द्रे सपापे फणिनाथयुक्ते रिःफे सुते रन्ध्रगतेऽथवाऽपि ।
जन्मादभक् तत्र सरोषयुक्तो जातस्तु नित्यं कलहप्रियः स्यात् ॥ ८३॥

चन्द्रेव्यये वा यदि वासुरेशे मन्दे त्रिकोणे मदरन्ध्रगेऽर्के ।

दन्ताक्षिरोगी च भवेत्तदानी नीचारिपापांशगतास्तथैव ॥ ८४॥

सुताम्बुगौ पापखगौ विशेषाच्चेदष्टरिःफारिगतेऽन्धता स्यात् ।
शुभग्रहाणामवलोकहीने चान्धो भवत्येव शुभैर्न दोषः ॥ ८५॥

हित्वा लग्नपति विलग्नसहितेष्वन्त्येषु कुष्ठं वदेत्
नीलं भानुसुते तु चण्डकिरणे रक्तं सितं भूमिजे ।
मन्देन क्षितिजेन वा यदि युते कर्क्यन्त्यनक्रांशके
केन्द्रे शोभनयोगदृष्टिरहिते कुष्टं वदेद् देहिनाम् ॥ ८६॥

पापान्विते शशिनि रन्ध्रपलग्नराशौ सर्पेक्षिते निधनपे यदि गुह्यरोगी ।
रन्ध्रे चतुस्त्रितयपापयुते तथैव सौम्यग्रहेण सहिते यदि रोगहीनः ॥ ८७॥

जलचरगृहरोगेन्दौ तत्पतौ षष्ठ्याते जलगृहगतखेटैरीक्षिते मूत्रकृच्छ्रम् ।
परिभवरिपुयाते शीतगौ भौमदृष्टे रविसुतयुतलग्ने शोणितं रोगमेति ॥ ८८॥

क्षीणे मन्दगृहोदये हिमकरे पापग्रहैरन्विते
रन्ध्रारातिगतेऽथवा पवनकृद् गुल्मादिरोगं वदेत् ।
चन्द्रे पापवियच्चरान्तरंगते मन्दे मदस्थानगे
जातो विद्रधिजन्मशोषजनितैः सन्तप्तदेहो भवेत् ॥ ८९॥

अजीर्णगुल्मामयशूलमेति कुजे विलग्ने विबलेऽरिनाथे ।
लग्ने सपापे फणिनायके वा मन्देऽष्टमे कुक्षिरुगदितः स्यात् ॥ ९०॥

हृच्छुलरोगमुपयाति सुखे फणीशे पापेक्षिते गतबले यदि लग्ननाथे ।
शूलाभयं तनुपतौ रिपुनीचराशौ भौमे सुखे रविसुते यदि पापदृष्टे ॥ ९१॥

जातो भुक्तिविरोधरेगनिहतो रन्ध्रेश्वरे दुर्बले
लग्ने पापनिरीक्षिते परिभवस्ताने समन्देक्षिते ।
वान्तिभ्रान्तिजपाण्डुमेति सकुजे चन्द्रे रिपुस्थान्गे
जातः शूलविसर्पमेति दिनकृच्चन्द्रारयुक्ते यदा ॥ ९२॥

आरेक्षिते यदि विलग्नगृहेऽरिनाथे भानेऽथवाऽस्ततनुगे कृतमाभिचारम् ।
लग्नाधिपेन सहितेऽवनिजे विलग्ने केन्द्रेऽथवा रिपुपतौ तनुगे तथा स्यात् ॥ ९३॥

जातो निर्जरदर्शनेन जनितं रोगं सुखस्थानगे
माने लग्नगतेऽथवाऽमरगुरौ केन्द्रे समन्दात्मजे ।
मन्देऽस्ते चरलग्नगे यदि शुभे पापेक्षिते शीतगौ

भूतप्रेतपिशाचदर्शनवशाद् रोगं समेति ध्रुवम् ॥ ९४॥

चन्द्रे पापनिरीक्षिते रिपुगते पापान्विते वातजम्
जातः शोणितपित्तमेति वसुधापुत्रे तथाऽस्ते सति ।
सौम्ये वातकफाभयं भृगुसुते मूलातिसारं तथा
मन्दे गुल्ममुपैति राहुशिखिनोः पैशाचरोगं वदेत् ॥ ९५॥

कासश्वासक्षयजनिरुजं भानुभौमाहिदृष्टे
षष्ठे सौरे गुलिकसहिते सौम्यदृग्योगहीने ।
रिःफे पापे शशिनि रिपुगे मानुजे रन्ध्रयाते
पापांशस्थे तनुगृहपतौ मीनसं रोगमेति ॥ ९६॥

मन्दे कुलीरभवनोपगते मृगस्थे चन्द्रे जलोदररुजं समुपैति जातः ।
सारे शनौ रिपुगते रविराहुदृईष्टे लग्नाधिपे च विबले सति दीर्घरोगी ॥ ९७॥

हस्वः कुजे निजगृहे सुखविक्रमस्थे चन्द्रात्मजे रविसुते यदि लग्नगे स्यात् ।
स्वर्क्षे कुजे सुखसहोदरगेन्दुसूनौ होरधिपे शनियुते तु तथा वदन्ति ॥ ९८॥

अथ होरायाम्

लग्नाद्व्ययारिगतयोः शशितिग्मरश्म्योः पत्न्या सहैकनयनस्य वदन्ति जन्म ।
द्यूनस्थयोर्नवमपङ्चमसंस्थयोर्वा शुक्रार्कयोर्विकलदारभुशन्ति जातम् ॥ ९९॥

नवमायतृतीयधीयुता न च सौम्यैरशुभा निरीक्षिताः ।
निथमाच्छ्रवणोपघातदा रदवैकृत्यकराश्च सप्तमे ॥ १००॥

वर्गोत्तमादिशुभवर्गयुतेऽमरेज्ये लग्ने रसातलगते यदि वा बलाढ्ये ।
वित्तायवृद्धिगृहगेषु वियच्चरेषु लग्नाधिपे बलयुते सुखमेति जातः ॥ १०१॥

ये जातभङ्गा नृपयोगभङ्गाः प्रेष्या दरिद्राङ्गविहीनरेकाः ।
ये रोगभेदाः परिकीर्तितास्ते सूर्यादिसर्वद्युचरप्रसादात् ॥ १०२॥

इति वैद्यनाथविरचिते जातकपारिजाते जातकभङ्गास्थे षष्ठाध्यायः ॥ ६॥

अथ राजयोगाध्यायः ॥ ७॥

कन्यमीननृयुग्मगोहरिधनुः कुम्भस्थितैः खेचरैः
सेनामत्तमतङ्गचाजिविपुलो राजा यशस्वी भवेत् ।
तौलिच्छागवृधावसानगृहगैर्जातोऽखिलक्ष्मापति-
र्गिचापान्त्यमकेन्द्रगैः पृथुयशाः पृथ्वीश्वरो जायते ॥ १॥

कन्यामेषतुलामृगेन्द्रघटगैर्जतो महीपालको
दुश्चिक्यप्रतिभारसातलगतैर्बहुर्र्थदेशाधिपः ।
खेटा विक्रमबन्धुपुत्रगृहगा द्वौ वित्तधर्मस्थितौ
शेषौ लग्नकलत्रराशिसहितौ राजा भवेद्द्धार्मिकः ॥ २॥

तारेशहोरासहिता गभोगा जातो यशस्वी मनुजाधिपः स्यात् ।
सौम्यास्तपोलाभगृहोपयाताः पापा रिपुव्योमगता नरेशः ॥ ३॥

लग्नास्पदानङ्गगृहोपयाता बलान्वितः शोभनखेचरेन्द्राः ।
कुजार्कपुत्रौ नवमायसंस्थौ नृपो भवेत्सर्वगुणाभिरांअः ॥ ४॥

वर्गोत्तमांशोपगते विलग्ने चन्द्रेऽथवा चन्द्रविमुक्तखेटैः ।
सुखास्पदानङ्गगृहोपयातैर्विलोकितैर्भानवनायकः स्यात् ॥ ५॥

अश्विन्यामुदयस्थिते भृगुसुते सर्वग्रहैरीक्षिते
जातो राजकुलाग्नजो रिपुकुलध्वंसी बहुस्त्रीरतः ।
हित्वा नीचनवांशमम्बरचरैस्त्र्याद्यैः स्वमागान्वितै-
रेको लग्नगतो यदि क्षितिपतिः पङ्चादिकैर्वित्तवान् ॥ ६॥

शुक्रेऽरिनीचमपहाय कुतुम्बसंस्थे लग्नेश्वरे बलयुते पृथिवीपतिः स्यात् ।
चन्द्रेऽतिमित्रनिजभागगते निशायां शुक्रेक्षिते नृपतिरन्यविलोकहीने ॥ ७॥

मीने मीननवांशके भृउगुसुते लग्नस्थिते भूपतिः
स्वोच्चे लग्नगृहाधिपे बलयुते राजा शशाङ्केक्षिते ।
लग्नस्वामिनि तुङ्गमन्दिरगते नीचारिभागंविना विना
केन्द्रस्थानगते नभोगवियुते जातो महीपालकः ॥ ८॥

भाग्यस्थे निजतुङ्गमित्रभवने सम्पूर्णगात्रे विधौ
लग्नादास्पदवित्तराशिगतयोः शन्यारयोर्भूपतिः ।
चन्द्रे पूर्णकलान्विते बलयुते लग्नं विना केन्द्रगे
दृष्टे दानवमन्त्रिणा च गुरुणा राजा महीदानकृत् ॥ ९॥

एकस्मिन्परमोच्चगेऽतिसुहृदा दृईष्टे यदि क्ष्मापति-

स्तत्तुल्यो भृगुनन्दने बलयुते लाभेऽथवा रिःफगे ।
द्वित्रिव्योमचरेषु तुङ्गगगृहगेष्विन्दौ कुलीरे स्थिते
लग्ने पूर्णबलान्विते नरपतिः सर्वत्र पूज्यो भवेत् ॥ २०॥

सर्वे चोपचयस्थिताः शुभस्वगाः पापा विलग्नस्थिता
मानस्था यदि वा जितारिनिचयः क्रूरो महीपालकः ।
भानौ सप्तमगे निशाकरयुते तुङ्गादिवर्गस्थिते
सौम्यासौम्यनिरीक्षितेऽतिचपलो राजाऽथवा तत्समः ॥ २१॥

नीचङ्गतो जन्मनि यो ग्रहः स्यात्तद्राशिनाथोऽपि तदुच्चनाथः ।
स चन्द्रलग्नाद्यदि केन्द्रवर्ती राजा भवेद्धर्मिकचक्रवर्ती ॥ २३॥

नीचस्थितग्रहनवांशपतौ त्रिकोणे केन्द्रेऽथवा चरगृहे यदि जन्मलग्ने ।
तद्भावपे चरगृहांशसमन्विते वा जातो महीपतिरतिप्रबलोऽथवा स्यात् ॥ २४॥

मानस्थनपतौ पराभवगते पारावतांशेऽथवा
स्वोच्चस्वर्क्षसुहृन्नवांशकगते राजाधिराजो भवेत् ।
लग्ने नीचगृहे पुरन्दरगुरौ रन्ध्रे सपापग्रहे
तद्राश्यंशसमन्विते यदि तदा राजाधिराजो भवेत् ॥ २५॥

जीवस्य व्ययगे शनौ सहजपे लाभेऽथवा भास्करे
रिःफे लग्नपतौ तु निर्जरगुरावुर्वीशराजो भवेत् ।
भाग्येशस्थन्वांशपे तनयगे बन्धुस्थिते वा नृपो
दृष्टे वा शशिजे सुरेन्द्रगुरुणा युक्ते स राजप्रियः ॥ २६॥

भाग्शेयेन निरीक्षिते ययिसुते केन्द्रस्थिते भृगुजाम्
तुल्शत्वं समुपैति जातमनुजो लग्नस्थिते वाक्पतौ ।
केन्द्रे वा शदि कोणगे रविसुते मूलत्रिकोणोच्चगे
लाभेयेन निरीक्षिते बलशुते भूपालतुल्शो भवेत् ॥ २७॥

लग्ने शीतकरे गुरौ सुखगते कर्मस्थिते भार्गवे
तुङ्गस्वर्क्षगते दिवाकरसुते राजाऽथवा तत्समः ।
अन्त्योपा न्त्वविलग्नवित्तसहजव्यापारगेहेषु वा
सौम्यव्योमचरेपु भूपतिसमो राजाधिराजप्रियः ॥ २८॥

मन्दे चोत्तमवर्गके बलयुते नीचा<शवर्ज्ये गुरौ
भानौ शोभनदृष्तिभागसहिते राजप्रियस्तत्समः ।
राहौ कर्मणि लाभगे रविसुते भाग्याधिपेनेक्षिते

लग्नेशे यदि नीचखेटरहिते पृथ्वीशतुल्यो भवेत् ॥ २९॥

नीचं गता द्वित्रिचतुर्ग्रहेन्द्राः षष्ठ्यंशके शोभनभागयुक्ताः ।
स्वतुङ्गराश्यांशसमन्विता वा धरापतिर्धर्मिकचक्रवर्ती ॥ २०॥

लग्नात्कर्मशुभाहिपौ शुभगृहाद्वयापारधर्मेश्वरौ
मानादास्पदभाग्यपौ च सहित्तावन्योन्यराशिस्थितौ ।
अन्योन्यक्षणकेन्द्रगौ धनपतेः सम्बन्धिनौ चेद्धनी
जातो यानपकायपिक्षितयुतौ बहुर्थयनाधिपः ॥ २१॥

षतसु ग्रहेषुच्चगृहस्थितेषु राजाधिराजोऽखिलभूपतिः स्यात् ।
उच्चं गतैः पङ्चभिरिन्द्रवन्धे लग्नस्थिते सर्वजनावनीशः ॥ २२॥

कुम्भोदयस्थे रविजे चतुर्भिः स्वोच्चंगतैः सर्वमहीपतिः स्यात् ।
मेषोदयस्थे यदि चन्द्रपुत्रे स्वोच्चं गते देवगुरौ नृपालः ॥ २३॥

चन्द्रे वृषोदयगते यदि षड्भिरन्यैर्दृष्टेऽतिबाल्यवयसि क्षितिनायकः स्यात् ।
तुङ्गस्थितैकस्वचरे निजमित्रयातैरन्यैः समेति नरपालसमानभोग्यम् ॥ २४॥

वर्गोत्तमे वा यदि पुष्करांशे सारेन्दुदेवेन्द्रगुरौ नृपालः ।
कर्मस्थिते शोभनदृष्तियुक्ते सम्पूर्णगात्रे शशिनि क्षितीशः ॥ २५॥

गुरुसितयुतचन्द्रे चापगे चन्द्रसूनौ यदि तनुगृहयाते भूमिजे कन्यकायाम् ।
मृईगसुखभवनस्थे भानुपुत्रे नृपः स्यादतिशयबलयुक्तः सर्वभूपालपूज्यः ॥ २६॥

कन्यावसानयुगचापमृगाननस्थैः सौम्येन्दुभौमगुरुभानुसुतैर्नृपालः ।
मीनोदये शशिनि पूर्णतनौ बलाढ्ये स्वोच्चे कुजे रविसुते घटगे नरेशः ॥ २७॥

मृगोदयस्थे यदि भुकुमारे कुलीरगे चन्द्रमसि क्षितीशः ।
धराजपूषामरवन्धमाना मृगाजकुम्भोपगता नरेशः ॥ २८॥

लग्नाधिपेतरयुते यदि पूर्णचन्द्रे शुक्रज्ञदेवगुरुदृईष्टियुते तु राजा ।
वर्गोत्तमांशसहिता गुरुशुक्रभौमाः पापा न केन्द्रभवनोपगता नरेशः ॥ २९॥

शीर्षोदयेषु निखिलद्युचरेषु चन्द्रे सौम्यग्रहेक्षणयुते कटके महीपः ।
लग्नाधिपे नवमगे दशमस्थिते वा लग्ने सुधाकरयुते पृथिवीपतिः स्यात् ॥ ३०॥

चापार्धं गतवान् सहन्नकिरणस्तत्रैव ताराधिपो

लग्ने भानुसुतेऽतिवीर्यसहिते स्वोच्चे च भूनन्दनः ।
यद्येवं भवति क्षितेरधिपतिः सन्त्यज्य शौर्यं भयाद्
दूरादेव नमन्ति तस्य रिपवो दग्धाः प्रतापाग्निना ॥ ३१॥

उपचयगृहसंस्थो जन्मपो स्यस्य चन्द्रात्
शुभगृहनवांशे केन्द्रयाताश्च सौम्याः ।
सकलबलवियुक्ता ये च पापाभिधानाः
स भवति नरनाथः शक्रतुल्यो बलेन ॥ ३२॥

उच्चामिलाषी सविता त्रिकोणे स्वर्क्षे शशी जन्मनि यस्य जन्तोः ।
स शास्ति पृथ्वी बहुरत्नपूर्णा बृहस्पतिः कर्कटकोपगश्चेत् ॥ ३३॥

स्वस्य त्रिकोणे रविरुच्चगोऽपि वा स्वस्वांशस्था रविशुक्रसोमजाः ।
तृतीयषष्ठमगा निशाकरात् कुर्वन्ति गोपालमिव क्षितीश्वरम् ॥ ३४॥

रविशाशिबुधशुक्रैर्व्योम्नि मित्रांशकस्थैर्न च रिपुभवनस्थैर्नाप्यदृश्यैर्न नीचैः ।
स भवति नरपुत्रो भुपतिर्यत् प्रयणे गजमदजलसेकैः सिच्यते यस्य रेणुः ॥ ३५॥

क्षमासुतः स्वोच्चमुपाश्रितो बली रवीन्दुवाचस्पतिभिर्निरिक्षितः ।
भवेन्नरेन्द्रो यदि कुत्सितस्तदा समस्तपृथ्वीपरिरक्षणक्षमः ॥ ३६॥

झ्षोदये सप्तमगे बृहस्पतौ चन्द्रे कुलीरे सुखराशिगेऽमले ।
वियद्गते भार्गवनन्दने ग्रहे प्रशास्ति पृथ्वीमगदो निराकुलः ॥ ३७॥

प्रधानबलसंयुक्तः सम्पूर्णः शशलाङ्छनः ।
एकोऽपि कुरुते जातं नराधिपमरिन्दमम् ॥ ३८॥

देवमन्त्री कुटुम्बस्थो भार्गवेण समन्वितः ।
करोति बहुधानाथं निर्जितारातिमण्डलम् ॥ ३९॥

लग्नेशे केन्द्रराशिस्थे कर्मेशे वृधिराशिगे ।
भाग्येशे लाभगे जातश्चिरञ्जिवी महीपतिः ॥ ४०॥

रविलुप्तकरः सौम्यः स्वस्थो मूलत्रिकोणगः ।
सर्वविद्याधिको राजा नेतरेषां स्वचारिणाम् ॥ ४१॥

अर्कज्ञौ सुखराशिश्थौ मन्देन्दू दशमस्थितौ ।
कुजोदये च सङ्जातो यदिराजा न संशयः ॥ ४२॥

दिवाकरोदये सिंहे शुक्रांशक्विवर्जिते ।
कन्यागते बुधे जातो नीचोऽपि पृथिवीपतिः ॥ ४३॥

मा(भा)नपुत्रोदयस्थौ वा मन्दावनिसुतौ यदि ।
पूर्णेन्दौ गुरुराशिस्थे जातो राजा भविष्यति ॥ ४४॥

बली विलग्नाधिपतिश्च केन्द्रे भूपालयोगं कुरुते नराणाम् ।
तन्मित्रदृष्टे यदि नीचवंशे जातोऽपि राजा नृपवन्दितो वा ॥ ४५॥

जन्माधिपः स्वोच्चगृहे मृगाङ्कं पश्यत्यवश्यं यदि भूमिपालः ।
गजादिसेनातुरगादिसङ्घैर्जितारिकोटिर्जगति प्रजातः ॥ ४६॥

लग्नं विहाय केन्द्रस्थे चन्द्रे पूर्णकलान्विते ।
गुरुभार्गवसन्दृष्टे जातो राजा भवेन्नरः ॥ ४७॥

लग्नेशे केन्द्रमावस्थे नीचमूढारिभं विना ।
नान्यग्रहयुक्ते राजा सार्वभौमो भविष्यति ॥ ४८॥

गुरुचन्द्रदिवानाथाः सुतविक्रमधर्मगः ।
जातो यदि महीपालः कुबेरसमवित्तवान् ॥ ४९॥

चापोदयस्थे बलिनि प्रभाकरे महीसुते कर्मगते सशीतगौ ।
उपान्त्यगे वा भृगुजे व्ययस्थिते सुरेन्द्रतुल्यो नृपतिः प्रजायते ॥ ५०॥

विक्रमायारिगाः पापा जन्मपः शुभवीक्षितः ।
राजा भवति तेजस्वी समस्तजनवन्दितः ॥ ५१॥

मृगोदयस्थे बलिनि क्षमासुते शनौतपःस्थानतेऽथवाऽन्त्यगे ।
देवाकरे सप्तमगे सशीतगौ महीपतिश्चङ्चलमानसो भवेत् ॥ ५२॥

लाभे सुखे वा दशमे समन्दश्चन्द्रमा यदि ।
जातो नृपकुले राजा तत्समो वा धनीभवेत् ॥ ५३॥

जातश्चोपचयस्थिते तनुपतौ चन्द्रे तपःस्थानगे
केन्द्रस्थाः शुभवर्गगा यदि शुभा वीर्यन्विता भूपतिः ।
जीवेन्दू वृषभस्थितौ बलयुतः कोणस्थितो लग्नपः
शान्यारेक्षणवर्जितो यदि तदा जातोऽवनीशो भवेत् ॥ ५४॥

दिवाकरे मीनगृहोपयाते कुलीरलग्ने शशिनि क्षितीशः ।
अरातिनीचग्रहदृष्टियुक्ता भूपालयोगं न दिशन्ति सर्वे ॥ ५५॥

जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः प्रचुरगुणसमेतं मित्रयोगाच्च सिद्धम् ।
विवसुखमूढव्याधितो बन्धुतप्तो वधदुरितसमेतः शत्रुनिम्नर्क्षगेषु ॥ ५६॥

धनुर्मीनतुलामेषभृगकुम्भोदये शनौ ।
चार्वङ्गो नृपतिविद्वान् परुग्रामाप्रणिर्भवेत् ॥ ५७॥

स्वोच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः ।
शुभं सम्पूर्णपादोनदलपादालप्निष्फलम् ॥ ५८॥

अथ पङ्च महापुरुषयोगाः ।

मूलत्रिकोणनिजतुङ्गगृहोपगाता भौमज्ञजीवसितभानुसुता बलिष्ठाः ।
केन्द्रस्थिता यदा रुचभद्रहंसमालव्यचारुशशयोगकरा भवन्ति ॥ ५९॥

अथ रुचक-योगफलम् ।

जातः श्रीरुचके बलान्वितवपुः श्रीकीर्तिशीलान्वितः
शस्त्री मन्त्रजपाभिचारकुशलो राजाऽथवा तत्समः ।
लावण्यारुणकान्तिकोमलतनुस्त्यागी जीतारिर्धनी
सप्तत्यब्दमितायुषा सह सुखी सेनातुङ्गाधिपः ॥ ६०॥

धर्मेशलाभेशधनेश्वराणामेकोऽपि शीतद्युतिकेन्द्रवर्ती ।
स्वयं च लाभाधिपतिर्गुरुश्चेदखण्डसाभ्राज्यपतित्वमेति ॥ ६१॥

अथ भाद्रयोगफलम् ।

शारूउलप्रतिमाननो गजगातिः पीनोरुवक्षस्थलो
लम्बापीनसुवृत्तबाहुयुगलस्तत्तुल्यमानोच्छ्रयः ।
मानी बन्धुजनोपकारनिपुणः श्रीभद्रयोगोद्भवो
राजाऽशीतिभितायुरेति विपुलप्रज्ञायशोवित्तवान् ॥ ६२॥

अथ हंसयोगफलम् ।

रक्तास्योन्नतनासिकः सुचरणो हंसखरः श्लेष्मको

गौरङ्गः सुकुमारदारसहितः कन्दर्पतुल्यः सुखी ।
शास्त्रज्ञानपरायणोऽतिनिपुणः श्रीहंसयोगे गुणी
जातोऽशीतिकमायुरेति सयुगं ८४ साधुक्रियाचारवान् ॥ ६३॥

अथ मालव्ययोगफलम् ।

स्त्रीचेष्टो ललिताङ्गसन्धिनयनः सौन्दर्यशाली गुणी
तेजस्वी सुतदारवाहनधनी शास्त्रार्थवित्पण्डितः ।
उत्साहप्रभुशक्तिमन्त्रचतुरस्त्यागी परस्त्रीरतः
सप्तत्यब्दमुपैति सप्तसहितं (77) मालव्ययोगोद्भवः ॥ ६४॥

अथ शशयोगफलम् ।

भूपो वा सचिवो वनाच्लरतः सेनापतिः क्रूरधी-
र्घतोवार्दविनोदङ्चनपरो दाता सरोषेक्षणः ।
तेजस्वी निजमातृभक्तिनिरतः शूरोऽसिताङ्गः सुखी
जातः सप्ततिरायुरेति शशके जारक्रियाशीलवान् ॥ ६५॥

गर्गहोरायाम् ।

यस्य योगस्य यः कर्ता बलवान् जितदृग्युतः ।
अधियोगादियोगेषु स्वदशायां फलप्रदः ॥ ६६॥

अथ भास्करादियोगाः ।

भानोरर्थगते बुधे शशिसुताल्लाभस्थितश्चन्द्रमा-
श्चन्द्रात्कोणगतैः पुरन्दरगुरुर्योगस्तदा भास्करः ।
शूरो भास्करयोगजः प्रभुसमः शास्त्रार्थविद्रुपवान्
गान्धर्वश्रुतिवित्तवान् गणितविद्धीरः समर्थो भवेत् ॥ ६७॥

अथ चन्द्रयोगः ।

चन्द्राद्विक्रमगः कुजोऽवनिसुतादस्ते शनिः सूर्यजा-
दस्ते दैत्यगुतुः सितान्मदनगो जीवो यदीन्द्राह्वयः ।
स्यातस्तत्रभवः सशीलगुणवान् भूपोऽथवा तत्समो
वाग्मी वित्तविचित्रभूषणयशोरूपप्रतापान्वितः ॥ ६८॥

अथ मरुद्योगः ।

शुक्रात् कोणगतो गुरुः सुरगुरोः पुत्र शशी शीतगोः
केन्द्रस्थानसमाश्रितो दिनकरो योगो मरुत्संज्ञकः ।
वाग्मी वायुभवो विशालहृदयः स्थूलोदरः शास्त्रवित्
सम्पन्नः क्रयविक्रयेषु कुशलो राजाऽथवा तत्समः ॥ ६९॥

अथ बुधयोगः ।

लग्नेज्ञो गुरुकेन्द्रगो हिमकरश्चन्द्रादहिर्वित्तगः
सौर्यस्थानगतौ च भानुरुधिरौ योगो बुधः कीर्तितः ।
राजश्रीबुधयोगजोऽतुलप्रख्यातनामा विदुः
शास्त्रज्ञानकरक्रियासु चतुरो भीमानशत्रुर्भवेत् ॥ ७०॥

अथ सुनफा-अनफा-धुरन्धुरा-केमद्रुमयोगाः ।

लग्नस्थिते हिमकरे यदि वा मदस्थे केमद्रुमो भवति जीवदृशा विहीने ।
अत्यल्पबिन्दुसहिता यदि खेचरेन्द्राः केमद्रुयोगफलदा विबलाश्च सर्वे ॥ ७१॥

द्वितीये द्वादशे पार्श्वे द्वये खेचरसंयुते ।
शीतांशोः सुनफायोगस्त्वनफानाम् कीर्तितः ॥ ७२॥

योगो धुरन्धुराख्यः स्याद्वीना सर्वत्र भास्करम् ।
एतद्योगत्रयाभावे केमद्रुमफलं वदेत् ॥ ७३॥

चन्द्रे सभानौ यदि नीचदृष्टे पापांशके यादि दरिद्रयोगम् ।
क्षीणेन्दुलग्नान्निधने निशायां पापेक्षिते पापयुते तथा स्यात् ॥ ७४॥

विधुन्तुदादिग्रहपीडितेन्तौ पापेक्षिते चाशु दरिद्रमेति ।
लग्नाचतुष्केन्द्रगृहे सपापे निशाकराद्वाऽशु दरिद्रमेति ॥ ७५॥

चन्द्रे पराजितशुभग्रहदृष्टियुक्ते राह्वादिपीडिततनौ तु दरिद्र एव ।
नीचारिवीक्षणयुते रिपुराशिवर्गे चन्द्रे तुलाधरगते तु तथा वदन्ति ॥ ७६॥

केन्द्रे वा यदि कोणगे हिमकरे नीचारिवर्गस्थिते
चन्द्रादन्त्यसपत्नरन्ध्रगृहगे जीवे दरिद्रो भवेत् ।
पापांशे रिपुवीक्षिते चरगृहे चन्द्रे चरांशेऽथवा
जातो याति दरिद्रयोगमतुलं देवेज्यदृग्वर्जिते ॥ ७७॥

अन्योन्यदृष्तौ शनिदानवेज्यौ नीचारिपापग्रहवर्गयातौ ।

एकर्क्षगौ वा यदि राजवंशे जातोऽपि लेमद्रुमयोगमेति ॥ ७८॥

चन्द्रे पापयुते तु पापभवने पापाम्शके वा निशि
व्योमेशेन निरिक्षिते गतबले केमद्रुयोगो भवेत् ।
भाग्यस्थानपवीक्षिते खलयुते नीचांशकेऽब्जे तथा
चन्द्रे नीचयुते निशि क्षयतनौ जातस्य केमद्रुमः ॥ ७९॥

अथ केमद्रुमयोगापवादः ।

निशाकरे केन्द्रगते भृगौ वा जीवेक्षिते नैव दरिद्रयोगः ।
शुभान्विते वाऽशुभमध्यगेन्दौ जीवेक्षिते नैव दरिद्रयोगः ॥ ८०॥

चन्द्रेऽतिमित्रनिजतुङ्गांशकस्थे जीवेक्षिते यदि दरिद्रतया विहीनः ।
चन्द्रेऽतिमित्रनिजतुङ्गगृहांशकस्थे जीवेक्षिते यदि दरोद्रतया विहीनः ॥ ८१॥

योगे केमद्रुमे प्राप्ते यस्मिन् कस्मिश्च जातके ।
राजयोगा विनश्यन्ति हरिं दृईष्वा यथा द्विपाः ॥ ८२॥

होरायाम् ।

हित्वाऽर्कं सुनफाऽनफादुरुधुरा स्वान्त्योभयत्थैर्ग्रहः
शीतांशोः कथितोऽन्यथा तु बलिभिः केमद्रुमोऽन्यैस्त्वसौ ।
केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते
केचित् केन्द्रनवांशकेषु च वदन्त्युक्तिप्रसिद्धा न ते ॥ ८३॥

अथ सुनफादियोगफलम् ।

स्वयमधिगतवित्तः पार्थिवस्तत्समो वा भवति हि सुनफायां धीधनख्यातिमांश्च ।
प्रभुरगदशरीरः शीलवान् ख्यातकीर्तिविषयसुखसुवेषो निर्वृतश्चानफायाम् ॥ ८४॥

दत्पङ्गभोगसुख भाग्धनवाहनाच्यस्त्यागान्वितो दुरुधुराप्रभवः सुभृत्यः ।
केमद्रुमे मलिनदुःखितनीचनिःस्वाः प्रेष्याः खलाश्च नृपतेरपि वंशजाताः ॥ ८५॥

अथ कुजादिकृतसुनफायोगफलानि ।

जातश्च भूपतिश्चण्डो हिंस्त्रो हिम्भः सुधीरधीः ।
धनविक्रमवान् कोपी चन्द्राद्धनगते कुजे ॥ ८६॥

वेदशास्त्रकलागेयकुशलः सुशरीरवान् ।
मनस्वी हितवाग् धर्मी चन्द्राद्वित्तगते बुधे ॥ ८७॥

सर्वविद्याधिकः श्रीमान् कुटुम्बी नृपल्लभः ।
राजतुल्यशस्त्री च चद्रात्वित्तगते गुरौ ॥ ८८॥

विक्रमस्त्रीधनक्षेत्रकर्मवान् बहुवित्तवान् ।
च्तुष्पदाढ्या राजस्त्रीः सिते चद्रात् कुतुम्बगे ॥ ८९॥

पुरग्रामस्थिताशेषैः पूजितो धनवान् सुधिः ।
निपुणः सर्वकार्येषु चन्द्राद्वित्तगते शनौ ॥ ९०॥

अथ कुजादिग्रहकृतानफयोगफलानि ।

मानी रणोत्सुकः क्रोधी धृष्टश्चोरजनप्रभुः ।
धीरः स्वतनुलोभी स्याच्चन्द्रादन्त्यगते कुजे ॥ ९१॥

गान्धर्वलेख्यपटुवाक् कविर्वक्ता सुदेहवान् ।
यशःस्वी राजपूज्यः स्यात् चन्द्राद्व्ययगते बुधे ॥ ९२॥

राजपूज्योऽतिमेधावी गाम्भीर्यगुणसत्त्ववान् ।
शुचिः स्थानधनाढ्यः स्याद् चन्द्राद् द्वादशगे गुरौ ॥ ९३॥

युवतीजनकदर्पुः पश्चादिधनवान् सुधीः ।
धन्धान्याधिकश्चन्द्रादन्त्यस्थानगते भृगौ ॥ ९४॥

विस्तीर्णबाहुर्गुणवान् नेता पश्चादिवित्तवान् ।
गृहीतवाक्यो दुस्त्रीकश्चन्द्रादन्त्यङ्गते शनौ ॥ ९५॥

अथ दुरन्धरयोगफलानि ।

असत्यवादी गुणवान् बिपुणोऽतिषठो गुणी ।
लुब्धो वृद्धोऽसतीसक्तश्चन्द्रे सौम्यारमध्यगे ॥ ९६॥

स्वकर्मविभवो दृष्टो यशस्वी रिपिपीडितः ।
स्वगेहशीलकृच्चन्द्रे मध्यगे कुजजीवयोः ॥ ९७॥

व्यायानी सुभगः क्रूरो हृष्टः सत्कामवित्तवान् ।

भयादशीलः  शीतांशौ मध्यगे कुजशुक्रयोः ॥ ९८॥

कुत्सितस्त्रीरतः क्रोधी धनवान् पिशुनोऽरिमान् ।
असन्तृप्तो निशानाथे मध्यगे कुजमदयोः ॥ ९९॥

धर्मात्मा शास्त्रविद्वाग्मी सत्कविः सज्जनान्वितः ।
यशस्वी च निशानाथे मध्यगे बुधजीवयोः ॥ १००॥

नृत्यगानरतः कान्तः प्रियवाक् शुभगः सुधिः ।
शूर्प्रकृतिकश्चन्द्रे मध्यगे बुधशुक्रयोः ॥ १०१॥

देशाद्देशं गतः पूज्यो नातिविद्याधनान्वितः ।
स्वबन्धुजनविद्वेषी चन्द्रे मन्दज्ञमध्यगे ॥ १०२॥

नृपतुल्यकरः श्रीमान् नीतिज्ञो विक्रमान्वितः ।
ख्यारोऽदुष्टमतिश्चन्द्रे मध्यगे गुरुशुक्रयोः ॥ १०३॥

सुखी विनयविज्ञानविद्यारूपगुणान्वितः ।
धनी शान्तिकरश्चन्द्रे मध्यगे शनिजीवयोः ॥ १०४॥

वृद्धाचारः कुलाढ्यश्च निपुणस्त्रीजनप्रभुः ।
धनी नृपप्रियश्चन्द्रे सितादित्यसुतान्तरे ॥ १०५॥

अवोच्चस्वमित्रभवनोपगतेषु सर्वं प्राप्नोति जातमनुजो नियतं युदक्तम् ।
स्वांशेषु वा निजसुहृद्गृहसंयुतेषु प्राहुस्थैव फलमस्ति पराशरद्याः ॥ १०६॥

चन्द्रः सराहुर्यदि वा सकेतुश्चन्द्रादहिर्वा यदि रिःफयातः ।
नीचास्तगो वा यदि योगकर्ता जातस्य मिश्रं फलमाहुरार्याः ॥ १०७॥

अथ शकटयोगः ।

षष्ठामगतश्चन्द्रात्सुरराजपुरोहितः ।
केन्द्रादन्यगतो लग्नाद्योगः शकटसंज्ञितः ॥ १०८॥

अपि राजकुले जातो निःस्वः शकटयोगजः ।
क्लेशायासवशान्नित्यं सन्तप्तो नृपविप्रयः ॥ १०९॥

अथ पारिजातादियोगफलानि ।

सपारिजारद्युचरः सुखानि नीरोगतामुत्तमवर्गयातः ।
सगोपुरांशो यदि गोधनानि सिंहासनस्थः कुरुते विभूतिम् ॥ ११०॥

करोति पारावतभागयुक्तो विद्यायशःशीविपुलं नराणाम् ।
सदेवलोको बहुयानसेनामैरावतस्थो यदि भूपतित्वम् ॥ १११॥

अथ अधमादि योगः ।

अधमसमवरिष्ठान्यर्ककेन्द्रादिसंस्थे
शशिनि विनयवित्तज्ञानधीनैपुणानि ।
अहनि निशि च चन्द्रे स्वाधिमित्रंशके वा
सुर्गुरुसितदृष्टे वित्तवान् स्यात् सुखी च ॥ ११२॥

अथ चन्द्राधियोगा ।

सौम्यैः स्मरारिनिधनेष्वधियोग इन्द्रोस्तस्मिंश्चमूपसचिवक्षितिपालजन्म ।
सम्पत्तिसौम्ख्यविभवा हतशत्रवश्च दीर्घयुषो विगतरेगभयाश्च जाताः ॥ ११३॥

अथ लग्नाधियोगः ।

लग्नादरिद्यूनगृहाष्टमस्थैः शुभैर्न पापग्रहयोगदृष्टैः ।
लग्नाधियोगो भवति प्रसिद्धिः पापः सुखस्थानविवर्जितैश्च ॥ ११४॥

लग्नाधियोगो बहुशास्त्रकर्ता विद्याविनीतश्च बलाधिकारी ।
मुख्यस्तु निष्कापटिको महात्मा लोके यशोवित्तगुणान्वितः स्यात् ॥ ११५॥

अथ गजकेसरीयोगः ।

केन्द्रस्थिते देवगुरौ मृगाङ्कायोगस्तदाहुर्गज्केसरीति ।
दृष्टे सितार्येन्दुसुतैः शशाङ्के नीचास्तहीनैर्गजकेसरी स्यात् ॥ ११६॥

गजकेसरिसङ्जातस्तेजस्वी धनधान्यवान् ।
मेधावी गुणसम्पन्नो राजप्रियकरो भवेत् ॥ ११७॥

अथ अमलायोगः ।

यस्य जन्मसमये शशिलग्नात् सद्ग्रहो यदि च कर्मणि संस्थः ।

तस्य कीर्तिरमला भुवि तिष्ठोदायुषोऽन्तमविनाशनसम्पत् ॥ ११८॥

लग्नाद्वा चन्द्रलग्नाद्वा दशमे शुभसंयुते ।
योगोऽयमभला नाम कीर्तिराचन्द्रतारकी ॥ ११९॥

राजपूज्यो महाभोगी दाता बन्धुजनप्रियः ।
परोपकारी गुणवान् अमलायोगसम्भवः ॥ १२०॥

अथ वास्यादियोगाः ।

व्ययधनयुतखेटैर्वासिवेवेशी दिनेशादुभयचरिकयोगश्चोभयस्थानसंस्थैः ।
निजगृहसुहृदुचस्थानयातैश्च जाता बहुधनसुखयुक्ता राजतुल्या भवन्ति ॥ १२१॥

वास्यादियोगफलानि ।

जातः सुशीलः शुभवेसियोगे वाग्मी धनी वीतभयो जितारिः ।
पापग्रहे दुष्टजनानुरक्तः पापार्मकरो वित्तसुखादिहीनः ॥ १२२॥

वासौ शुभग्रहयुते निपुणः प्रदाता विद्याविनोदसुखवित्तयशोबलाढ्यः ।
पापान्विते यदि विदेशगतोऽतिमूर्खः कामातुरो वधरुचिर्विकृताननः स्यात् ॥ १२३॥

सौम्यान्वितोभयचरीप्रभवा नरेन्द्रास्तत्तुल्यवित्तसुखशीलदयानुरक्ताः ।
पापान्वितोभयचरौ यदि पापकृत्या रोगाभिभूतपरकर्मरता दरिद्राः ॥ १२४॥

अथ शुभादियोगाः ।

शुभाशुभाढ्ये यदि जन्मलग्ने शुभाशुभाख्यौ भवतस्तदानीम् ।
व्ययस्वगैः पापशुभैर्विलग्नात् पापाल्ह्यसौम्यग्रहकर्त्तरी च ॥ १२५॥

शुभयोगभवो वाग्मी रूपशीलगुणान्वितः ।
पापयोगोद्भवः कामी पापकर्मा परार्थभुक् ॥ १२६॥

शुभकर्तरिसङ्जातस्तेजोवित्तबलाधिकः ।
पापकर्तरिके पापी भिक्षाशी मलिनो भवेत् ॥ १२७॥

अथ पर्वतयोगः ।

सौम्येषु केन्द्रगृहगेषु सपत्नरन्ध्रे शुद्धे,अथवा शुभयुते यदि पर्वतः स्यात् ।

लग्नान्त्यपौ यदि परस्परकेन्द्रयातौ मित्रेक्षितौ भवति पर्वतनाम योगः ॥ १२८॥

भाग्यान्वितः पर्वतयोगजातो विद्याविनोदाभिरतः प्रदाता ।
कामी परस्त्रीजनकेलिलोलस्तेजोयशस्वी पुरनायकः स्यात् ॥ १२९॥

अथ काहलयोगः ।

अन्योन्यकेन्द्रगृहगौ गुरुबन्धुनाथौ लग्नाधिपे बलयुते यदि काहलः स्यात् ।
कर्मेश्वरेण सहिते तु विलोकिते वा स्वोच्चस्वके सुखपतौ यदि तादृशः स्यात् ॥ १३०॥

ओजस्वी साहसी मूर्खश्चतुरङ्गबलैर्युतः ।
यत्किङ्चिद्ग्रामनाथस्तु जातः स्यात् काहले नरः ॥ १३१॥

अथ मालिकायोगः ।

लग्नादिसप्तगृहगा यदि सप्त खेटा जातो महीपतिरनेकगजाश्वनाथः ।
वित्तादिगो निधिपतिः पितृभक्तियुक्तो धीरोऽग्नरूपगुणवान् नरचक्रवर्ती ॥ १३२॥

जातो चदा विक्रममालिकायां भूपः स शूरो धनीकश्च रोगी ।
सुखदिकषेद् बहुदेशभाम्यभोगी महादानपरो महीपः ॥ १३३॥

पुत्राथा यदि मालिका नरपतिर्यन्वाऽथका कीर्तिमान् ।
लातः चष्ठगृहात् कचिद् धनसुखप्राप्तो दरिद्रो भवेत् ।
कामादिग्रहमालिका यदि बहुस्त्रीयज्ञभो भूपतिः ।
दीर्घधनवर्जितो नरवरस्त्रीनिर्जितश्चाष्टमान् ॥ १३४॥

धर्मादिग्रहमालिका गुणनिधिर्यज्वा तपस्वी विभुः ।
कर्माद्या यदि धर्मकर्मनिरतः सम्पूजितः सज्जनैः ।
लाभाद्राजवराङ्गनामनिपतिः सर्वक्रियादक्षको ।
जातो रिःफगृहाद्बहुव्ययकरः सर्वत्र पूज्यो भवेत् ॥ १३५॥

अथ चामरयोगः ।

लग्नेश्वरे केन्द्रगते स्वतुङ्गे जीवेक्षिते चामरनाम् योगः ।
सौम्यद्वये लग्नगृहे कलत्रे नवास्पदे वा यदि चामरः स्यात् ॥ १३६॥

योगे जातश्चामरे राजपूज्यो विद्वान् वाग्मी पण्डितो वा महीपः ।
सर्वज्ञः स्वाद्वेदशास्त्राधिकारी जीवेल्लोके सप्ततिर्वत्सराणाम् ॥ १३७॥

अथ शङ्कयोगः ।

अन्योन्यकेद्न्रगृहगौ सुतशत्रुनाथौ लग्नाधिपे बलयुते यदि शङ्कयोगः ।
लग्नाधिपे च गगनाधिपतौ चरस्थे भाम्याधिपे बलयुते तु तया वदन्ति ॥ १३८॥

श॥ए जातो भोगशीलो दयालुः स्त्रीपुत्रार्थक्षेत्रवान् पुण्यकर्मा ।
शास्त्रज्ञानाचारसाधुक्रियावान् जीवेल्लोके वत्सराणाभशीतिः ॥ १३९॥

अथ भेरीयोगः ।

स्वान्त्योदयास्तभवनेषु वियचरेषु कर्माधिपे बलयुते यदि भेरियोगः ।
केन्द्रं गतौ सुरगुरोः सितलग्ननाथौ भाग्येश्वरे बलयुते तु तथैव वाच्यम् ॥ १४०॥

दीर्घायुषो विगतरोगभया नरेन्द्राः बह्वर्थभूमिसुतदारयुताः प्रसिद्धः ।
आचारभुरिसुखशौर्यमहानुभावाः भेरीप्रजातमनुजा निपुणाः कुलीनाः ॥ १४१॥

अथ् मृदङ्गयोगः ।

उच्चग्रहांशकपतौ यदि कोणकेन्द्रे तुङ्गस्वकीयभवनोपगते बलाढ्ये ।
लग्नाधिपे बलयुते तु मृदङ्गयोगः कल्याणरुपनृपतुल्ययशःप्रदः स्यात् ॥ १४२॥

अथ श्रीन्नाथयोगः ।

कामेश्वरे कर्मगते स्वतुङ्गे कर्माधिपे भाग्यपसंयुते च ।
श्रीनाथयोगः शुभदस्तदानीं जातो नरः शक्रसमो नृपालः ॥ १४३॥

अथ शारदयोगः ।

योगः शारदसंज्ञकः सुतगते कर्माधिपे चन्द्रजे
केन्द्रस्थे दिननायके निजगृहप्राप्तेऽतिवीर्यान्विते ।
चन्द्रात् कोणगते पुरन्दरगुरौ सौम्यत्रिकोणे कुजे
लाभे वा यदि देवमन्त्रिणि बुधात्तच्छारदासंज्ञकः ॥ १४४॥

स्त्रीपुत्रबन्धुसुखरूपगुणानुरक्ताः भूपप्रिया गुरुमहीसुरदेवभक्तः ।
विद्याविदोदरतिशीलतपोबलाढ्या जाताः स्वधर्मनिरता भुवि शारदाख्ये ॥ १४५॥

अथ मत्स्ययोगः ।

लग्नधर्मगते पापे पञ्चमे सदसद्युते ।
चतुरस्त्रं गते पापे योगोऽयं मत्स्यसंज्ञकः ॥ १४६॥

कालज्ञः करुणासिन्धुर्गुणधीबलरुपवान् ।
यशोविद्यातपस्वी च मत्स्ययोगसमुद्भवः ॥ १४७॥

अथ कुर्मयोगः ।

कलत्रपुत्रारिगृहेषु सौम्याः स्वतुङ्गमित्रांशकराशियाताः ।
तृतीयलाभोदयगास्त्वसौम्या मित्रोच्चसंस्था यदि कूर्मयोगः ॥ १४८॥

विख्यातकीर्तिर्भुवि राजभोगी धर्माधिकः सत्त्वगुणप्रधानः ।
धीरः सुखा वागुपकारकर्ता कुर्मोद्भवो मानवनायको वा ॥ १४९॥

अथ खाङ्गयोगः ।

भाग्येशे धनभावस्थे धनेशे भाग्यराशिगे ।
लग्नेशे केन्द्रकोणस्थे खङ्गयोग इतीरितः ॥ १५०॥

वेदार्यशास्त्रनिखिलागमतत्त्वयुक्तिभिद्धिप्रतापबलवीर्यसुखानुरक्ताः ।
निर्मत्सराश्च निजवीर्यमहानुभावाः खङ्गे भवन्ति पुरुषाः कुशलाः कृतज्ञाः ॥ १५१॥

अथ लक्ष्मीयोगः ।

केन्द्रे मूलत्रिकोणस्थे भाग्येशे परमोच्चगे ।
कग्नाधिपे बलाढ्ये च लक्ष्मीयोग इतीरितः ॥ १५२॥

गुणाभिराभो बहुदेशनाथो विद्यामहाकीर्तिरनङ्गरूपः ।
दिगन्तविश्रान्तनृपालवन्द्यो राजाधिराजो बहुदारपुत्रः ॥ १५३॥

अथ कुसुमयोगः ।

स्थिरलग्ने भृगौ केन्द्रे त्रिकोणेन्दौ शुभेतरे ।
मानस्थानगते सौरे योगोऽयं कुसुमो भवेत् ॥ १५४॥

दाता महीमण्डलणथवन्द्यो भोगी महावंशजराजमुख्यः ।
लोके महाकीर्तियुतः प्रतापी नाथो नराणां कुसुमोद्भवः स्यात् ॥ १५५॥

अथ पारिजातयोगः ।

विलग्ननाथस्थितराशिनाथस्थानेश्वरो वाऽपि तदंशनाथः ।
केन्द्रत्रिकोणोपगतए यदि स्यात्स्वतुङ्गगो वा यदि परिजातः ॥ १५६॥

मध्यान्तसौख्यः क्षितिपालवन्द्यो युद्धप्रियो वारणवार्जितयुक्तः ।
स्वकर्मधर्माभिरतो दयालुर्योगो स्याद्यदि पारिजातः ॥ १५७॥

अथ कलानिधियोगः ।

द्वितीये पङ्चमे जीवे बुधशुक्रयुतेक्षिते ।
क्षेत्रे तयोर्वा सम्प्राप्ते योगः स्यात्स कलानिधिः ॥ १५८॥

कामी कलानिधिभवः सगुणाभिरामः संस्तूयमानचरणो नरपालमुख्यैः ।
सेनातुरङ्गमदवारणशङ्खभेरीवाद्यान्वितो विगतरेगभयारिसङ्घः ॥ १५९॥

अथ अंशावतारयोगः ।

केन्द्रगौ सितदेवेज्यौ स्वोचे केन्द्रगतेऽर्कजे ।
चरलग्ने यदा जन्म योगोऽयभवतारजः ॥ १६०॥

पुण्यश्लोकस्तीर्थचारी कलाज्ञः कामासक्तः कालकर्ता जितात्मा ।
वेदान्तज्ञो वेदशास्त्रधिकारी जातो राजश्रीधरोऽंशावतारे ॥ १६१॥

अथ हरि-हर-विवियोगाः ।

वित्तेशाद्धनरिःफरन्ध्रभवनप्राप्ताश्च सौम्यग्रहाः
कामेशात् सुखभाग्यरन्ध्रगृहगा जीवाब्जचन्द्रात्मजाः ।
देहेशाद्यदि बन्धुमानभवगा सूर्यास्फुजिद्भूमिजाः
प्रोक्तास्तत्र पुरातनैर्हरिहरव्रह्माख्ययोगा इमे ॥ १६२॥

निखिलनिगमविद्यापारगः सत्यवादी सकलसुखसमेतश्चारुवाक् कामशीलः ।
जितरिपुकुलसङ्धः सर्वजीवोपकारी हरिहरविधियोगे सम्भवः पुण्यकर्मा ॥ १६३॥

अथ नाभसयोगः ।

यूपेषुशक्तियवदण्डगदासमुद्रच्छत्रार्द्धचन्द्रशकटाम्बुजपक्षियोगाः ।

नौचक्रवज्नहलकार्मुककूटवापीशृन्गाटकाश्च विविधाकृतिविंशतिः स्युः ॥ १६४॥

रब्जुर्नलश्च मुसलस्त्रित यास्त्रयाख्याः स्रग्भोगिनौ तु दलयोगभवौ भवेताम् ।
वीणादयश्च कथिता दरदामपाशकेदारशूलयुगगोलकसप्तसङ्ख्याः ॥ १६५॥

होरायाम् ।

रब्जुर्मुसलं नल चराद्यैः सस्यस्त्वाश्चयजान् जगाद् योगान् ।
केन्द्रैः सदसद्युतैर्दवाख्यौ स्वक्सर्पौ कथितौ पराशरेण ॥ १६६॥

योगा व्रजन्त्याश्रयजाः समत्वं यावाब्जवश्राण्डजगोलकाद्यैः ।
केन्द्रोपगप्रोक्तफलौ दलाख्यावित्यहुरन्ये न पृथक् फलौ तौ ॥ १६७॥

इदानी गदाशकटविहगशृन्गाटकहलान् पञ्च योगानाह ।

आसन्नकेन्द्रभवनद्वयगैर्गदाख्यस्तन्वस्तगेषु शकटं विहगः स्वबन्ध्वोः ।
शृईङ्गटकं नवमपङ्चमलग्नसंस्थैर्लग्नान्यगैर्हलमिति प्रवदन्ति तज्ज्ञाः ॥ १६८॥

शकटाण्डजवच्छुभाशुभैर्वज्नन्तद्विपरीतगैर्यवः ।
कमलं तु विमिश्रसंस्थतैर्वापी तद्यादि केन्द्रबाह्यतः ॥ १६९॥

कण्टकादिप्रवृत्तैश्च वतुर्गृहगतैर्ग्रहैः ।
यूपेषुशक्तिदण्डाख्या होराद्यैः कण्टकैः क्रमात् ॥ १७०॥

नौकूटच्छत्रचापानि तद्वत्सप्तर्क्षसंस्थितैः ।
अर्धचन्द्रस्तु होराद्यैः प्रोक्तादन्यर्क्षसंस्थितैः ॥ १७१॥

एकान्तरगतैरर्थात्समुद्रः षड्गृहाश्रितैः ।
विलग्नादिस्थितैश्चक्रमित्याकृतिजसङ्ग्रहः ॥ १७२॥

सङ्ग्यायोगाः सप्त सप्तर्क्षसंस्थैरेकापायद्वल्लकीदामपाशाः ।
केदाराख्यः शूलयोगो बुगं च गोलश्चान्यान् पूर्वमुक्तान्विहाय ॥ १७३॥

अथ आश्रयदलयोगफलम् ।

ईर्ष्युर्विदेशनिरतोऽध्वरतश्च रज्जवाम् मानी धनी च मुसले बहुभृत्यसक्तः ।
व्यङ्गः स्थिराढ्यनिपुणो नलजः स्नगुत्थो भोगान्वितो भजगतो बहुदुःखभाजः ॥ १७४॥

अथ गदादियोगफलम् ।

यज्वाऽर्थभाक् सततमर्थरुचिर्गदायां तद्वृत्तिभुक् शकतः सरुजः कुदारः ।
दूतोऽटनः कलकृद्विहगे प्रदिष्टः, शृण्गाटके चिरसुखी कृषकृद्धलाख्ये ॥ १७५॥

वज्नेऽन्त्यपूर्वसुखितः सुभगोऽतिशूरः, शौचान्वितोऽपि च यत्रे सुखितो वयोऽन्तः
विख्यातकीर्त्यमितसौख्यगुणाश्च पद्मे वाप्यां तनुस्थिरसुखी निधिपोऽन्नदाता ॥ १७६॥

त्यागात्मवान् क्रतुरैर्यजते च यूपे हिंस्रोऽथ गुप्त्याधिकृतः शरकृच्छराख्ये ।
नीचोऽलसः सुखधनैर्वियुतश्च शल्तौ दण्डे प्रियैर्विरहितः पुरुषोऽन्त्यवृत्तिः ॥ १७७॥

क्षत्रे चाद्यन्तसौख्यातुलधनबलवान् नौभस्तोयजीवी
चक्रे राजा यशस्वी जलाधिभवनरस्तोयवृत्तिः क्षितीशः ।
अर्धेन्दौ भोगशाली गिरिविपिनचरः क्रूरकर्मा च कूटे
चापे जाता मनुष्या यदि गहनचराश्चौर्यनिष्ठा निकृष्टाः ॥ १७८॥

वीणायां सकलक्रियासु निपुणः सङ्गीतनृत्यप्रियो-
दामिह्यामुपकारकृत्पटुमतिः प्रख्यातविद्याधनी ।
पाशे शीलधनार्जनेऽतिचतुरो वाचालकः पुत्रवान्
केदारे कृषिवित्तवानलसदीर्बन्धूपकारी भवेत् ॥ १७९॥

शूले कोपरतन्वितो धनरुचिः शूरः क्षतो निर्धनी
भिक्षाशी युगयोगजोऽतिचपलः पापण्डको मद्यपः ।
गोले निर्द्वनकोऽलसोऽटनपरः स्वल्पायुरज्ञानधी-
द्वत्रिंशन् कथिता वराहमिहिराचार्येण योगा इये ॥ १८०॥

भूपालयोगरुचपङ्चकभास्कराद्याः केमद्रुमाधमसनग्रहमालिकाश्च ।
लक्ष्मीहरीशविधिकाहलनाभसद्याः सूर्यादिदेवकृपया परिकीर्तितास्ते ॥ १८१॥

इति श्रीवैद्यनाथदैवज्ञविरचिते जातकपारिजाते राजयोगासये सप्तमेऽध्याये ॥ ७॥

अथ द्व्यादिग्रहयोगाध्यायः ॥ ८॥

जातः स्त्रीवशगः क्रियासु निपुणश्चन्द्रन्विते भास्करे
तेजस्वी बलसत्त्ववाननृतवाख़् पापी सभौमे रवौ ।
विद्यारूपबलान्वितोऽस्थिरमतिः सम्यान्विते पूषणि

श्रद्धाकर्मपरो नृपप्रियकरो भानौ सजीवे धनी ॥ १॥

स्त्रीमूलार्जितबन्धुमाननियुतः प्राज्ञः सशुक्रेऽरुणे
मन्दप्रायमतिः सपत्नवशगो मन्देन युक्ते रवौ ।
शूरः सत्कुलधर्मवित्तगुणवानिन्दौ धराजन्विते
धर्मी रास्त्रपरो विचित्रगुणवान् चन्द्रे सतार्सुते ॥ २॥

जातः साधुजनाश्रयोऽतिमतिमानार्येण युक्ते विधौ
पापास्मा क्रयविक्रयेशु कुशलः शुक्रे सशीतद्युतौ ।
कुस्त्रीजः पितृदूपको गतधनस्तारापतौ सार्कजे
वाग्मी चौषघशिल्पशास्त्रकुशलः सौम्यान्विते भूसुते ॥ ३॥

कामी पूज्यगुणान्वितो गणितविद् भौमे सदेवाच्चिंते,
धानोर्वादरतः प्रपङ्चरसिको धूर्तः सभौमे भृगौ ।
वादी गानविनोदविज्जडमतिः सौरेण युक्ते कुजे
वाग्मी गानविनोदविज्जतोऽधिकधनी वाचस्पतौ सेन्दुजे ॥ ४॥

शास्त्री गानविनोदहास्यरसिकः शुक्रे सचन्द्रात्मजे
विद्यावित्तविशिष्टधर्मगुणवानर्कात्मजे सेन्दुजे ।
तेजस्वी नृपतिप्रियोऽतिमतिमान् शूरः सशुक्रे गुरौ
शिल्पी मन्त्रिणि साकजे पशुपतिर्मल्लः सिते सासिते ॥ ५॥

अथ त्रिग्रहयोगाः ।

सूर्येन्दुक्षितिनन्दनैररिकुलध्वंसी धनी नीतिमान्
जातश्चन्द्ररवीन्दुजैर्नृपसमो विद्वान् यशस्वी भवेत् ।
सोभाकार्मन्त्रिभिर्गुणनिधिविद्वान् नृपालप्रियः
शुक्रार्केन्दुभिरन्यदारनिरतः क्रूरोरिभीतो धनी ॥ ६॥

मन्देन्द्वर्कसमागमे खलमतिर्मायी विदेशाप्रियो
भास्वद्भूसुतबोधनैर्गतसुखः पुत्रार्धदारान्वितः ।
जीवार्कवनिजैरतिप्रियकरो मन्त्री चमूपोऽथवा
भौमार्कासुरवन्दिर्नयनरुग् भोगी कुलीनोऽर्थवान् ॥ ७॥

मन्दार्कावनिजैः स्वबन्धुरहितो मुर्खोऽधनो रोगभाक्
इन्द्राचार्यरवीन्दुनैः पटुमतिर्विद्यायशोवित्तवान् ।
भानुज्ञासुरपूजितैर्मृदुतनुर्विद्यांशस्वी सुखी
सौरादित्यबुधैर्विबन्धुरधनो द्वेषी दुराचारवान् ॥ ८॥

जीवादित्यसितैः सदारतनयः प्राज्ञोऽक्षिरुग् वित्तवान्
मन्देन्द्राचिंतभानुभिर्गतभयो राजप्रियः सात्विकः ।
जातो भानुसितासितैः कुचरितो गर्वाभिमानान्वित-
श्चन्द्रारेन्दुसुतैः सदाऽशनपरो दुष्कर्मकृद् दूपकः ॥ ९॥

जीवेन्दुक्षितिजैः सरोषवचनः कामातुरो रूपवा-
निन्दुक्ष्माजसितैर्विशीलतनयः सङ्चारशीलो भवेत् ।
तारेशार्कजभूसुतैश्चलमतिर्दुष्टात्मको मातृहा
जीवेन्दुज्ञसमागमे बहुधनख्यातोऽवनीशप्रियः ॥ १०॥

विद्यावानपि नीचकर्मनिरतः सेव्यः सितज्ञेन्दुभि-
स्त्यागी भूपतिपूजितश्च गुणवानिन्दुज्ञतिग्मांशुजैः ।
प्राज्ञः साधुसुतः कलासु निपुणः शुक्रेन्दुदेवाच्चिन्तैः
शास्त्री वृद्दबधूरतो नृपसमो वाचस्पतीन्द्वर्कजैः ॥ ११॥

वेदी राजपुरोहितोऽतिसुभगः शुक्रेन्दुचण्डांशुजै-
र्गान्धर्वश्रुतिकाव्यनाटकपरो जीवज्ञभूनन्दनैः ।
हीनाङ्गः खलवंशजश्चलभतिः शुक्रारचन्द्रात्मजः
प्रेश्यः सामयलोचनोऽटनपरस्ताराजभौमासितैः ॥ १२॥

शुक्रारेन्द्रपुरोहितैर्नरपतेरिष्टः सपुत्रः सुखी
जीवारार्कसुतैः कृशोऽसुखतनुर्मानी दुराचारवान् ।
सौरारसुरपूजितैः कुतनये नित्यं प्रवासान्वितः
शुक्रज्ञामरमन्त्रिभिजितरिपुः की तिप्रतापान्वितः ॥ १३॥

देवेज्येन्दुजभानुजैरतिसुखश्रिकः स्वदारप्रियो
मन्दज्ञासुरवन्दितैरनृतवाग् दुष्टोऽन्यजायारतः ।
जातो जीवसितासितैरमलधीविख्यातसौख्यान्वित-
चन्द्रे पापयुते सदाल्पसुखवान् भानौ पितुस्तद्वदेत् ॥ १४॥

अथ चतुर्ग्रहयोगाः ।

एकर्क्षगैरिननमुचाकरभूसुतज्ञैर्नयी प्रणञ्चकुशलो लिपिकश्च रोगी ।
चन्द्रारभानुगुरुभिधनवान्यशन्वी धीनान्नृपप्रियकरो गतशोकरोगः ॥ १५॥

आरार्क्चन्द्रभृगुजैः सुतदारबन्धु विद्वान् निताशनसुखी निपुणः कुपालुः ।
सूर्येन्दुभानुनभूमिसुतैरशान्तनेत्रओऽटनश्च कुतटापतिरर्थनीनः ॥ १६॥

तारासुतेन्दुरविमन्त्रिभिरिष्टपुत्रहारार्धवान् गुणवशेबलवानुदायः ।
शुक्रेन्दुभानुशशिजैविकलश्च भग्नी मन्देन्दुविहिनकरैरधनः कृतघ्नः ॥ १७॥

तोयाटविक्षितिचरोऽवनिपालपुज्यो भग्नी दिनेशतुदिनद्युतिजीवशुक्रैः ।
जातो विशालनयनो बहुवित्तपुत्रो वाराङ्गनापनिविनेन्दुसुरेज्यनन्दैः ॥ १८॥

मन्देन्दुभानुभृगुजैविबलोऽतिभीरः कन्याज्नाश्रयधनाशनत्परश्च ।
आतारुणज्ञगुरुभिः सवलो विपन्ने दरार्धवान् नयन्रोगयुतोऽनुगः स्यात् ॥ १९॥

रविकुजबुधशुक्रैरन्यदारानुरक्तो विषमनयनचेपश्चोरधीर्वीतसत्त्वः ।
दिनकरकुजतारासूनुमन्दैश्चमूपो नरपतिसचिवो वा नीचकृद् भोगशीलः ॥ २०॥

सूर्यारार्यसिअतिर्मद्वीपतिसमः ख्यातोऽतिपूज्यो भनी
जीवारार्किदिवकरैर्गतधनो भ्रान्तः मृदुद्वन्धुमान् ।
भूपुत्रार्कसितासितैः परिभवप्राप्तो विकर्मागुणः
शुक्रार्केन्दुजसूरिभिर्धनयशोमुख्यप्रधानो भवेत् ॥ २१

जीवार्किज्ञदिवाकरैः कलहकृन् मानी दुराचारवान्
मदज्ञारुणभार्गवैः सुवदनः सत्यव्रताचारवान् ।
अर्कार्किज्यसितैः कलासु निपुणो नीचप्रभुः साहसी
जीवेन्दुज्ञकुजैर्नृपप्रियकरो मन्त्री कविः क्ष्मापतिः ॥ २२॥

चन्द्रारज्ञसितैः सुदारतनयः प्राज्ञो विरुपः सुखी-
मन्दरेन्दुभ्धैद्विमातृपितृकः शूरो बहुस्त्रीसुतः ।
चन्द्रारार्यसितैरधर्मकुशलो निद्रालुरर्थानुरो
जीवारार्किनिशाकरैः स्थिरमतिः शूरः शुखी पण्डितः ॥ २३॥

शुक्रज्ञेन्दुसुरार्जितैः स वधिरो विद्वान्यशस्वी धनी
चन्द्रार्किज्ञसुराच्चितैरतिधनो बन्धुप्रियो धार्मिकः ।
शीतांशुज्ञसितासितैर्बहुजनद्वेषी परस्त्रीपति-
जीर्वेन्द्वर्कजभार्गवैर्गतसुखः श्रद्धादयावर्जितः ॥ २४॥

कुजबुजगुरुशुक्रैरर्थवान्निन्दितः स्यात् बुधगुरुशनिभौमैः सामयो वित्तहीनः ।
गुरुसितशनिसौम्यैरेकगेहोपयातैरतिशयधनविद्याशीलमेति प्रजातः ॥ २५॥

अथ पङ्चग्रहयोगाः ।

एकर्क्षगैरिनशशिक्षितिजज्ञजीवैर्जातस्तु युद्धकुशलः पिशुनः समर्थः ।
शुक्रारभानुबुधशीतकरैर्विधर्मश्रद्धालुरन्यजनकार्यपरो विबन्धुः ॥ २६॥

भनन्दनेन्दुरविमन्दपुरन्दरेज्यैराशालुइष्टर्मणीबिरहाभिभूतः ।
चन्द्रारभानुशशिसूनुदिनेशपुत्रैरल्पायुरर्जनपरो विकलत्रपुत्रः ॥ २७॥

जीवेन्दुभौमसितभानुभिराततायी त्यक्तः स्वमातृपितृनधुजनैरनेत्रः ।
मन्देन्दुशुक्ररविभूमिसुतैर्विनामवित्तप्रभावकुशलो मलिनोऽन्यदारः ॥ २८॥

तारेशभानुगुरुबोधनदानवेज्यैर्मन्त्री धनी बलयशोनिजदण्डनाथः ।
भास्वद्बुधेन्दुगुरुभानुसुतैः परान्नभोजी सुभीरुरतिपापरतोग्रवृत्तिः ॥ २९॥

सौम्यासितेन्दुसितभानुभिरर्थहीनो दीर्घाकृतिर्गतसुतो बहुरोगगात्रः ।
जीवेन्द्रशुक्ररविभानुसुतैः सदारो वाग्मीन्द्रजालचतुरो विभयः सशत्रुः ॥ ३०॥

शुक्रारभानुगुरुचन्द्रसुतैर्विशोकः सेनातुरङ्गपतिरन्यवधूविलोलः ।
भूसूनुजीवरविबिधनभानुपुत्रैभिक्षाशनो मलिनजीर्णतराम्बरः स्यात् ॥ ३१॥

पूज्यः कलासु निपुणो वधबन्धनाढ्यो रोगी सितासितगुरुज्ञधराकुमारैः ।
श्रेष्ठोऽतिदुःखभयरोगयुतः क्षुधार्तः शन्यारबोधनविकर्तनदानवेज्यैः ॥ ३२॥

प्रेष्योऽधनो मलिनवेषयुतोऽतिमूर्खश्चोरः कुजेन्दुगुरुशुक्रदिनेशपुत्रैः ।
मन्त्राक्रियासुरतधातुबलप्रसिद्धिकर्मा गुरुज्ञशनिचन्द्रवसुन्धराजैः ॥ ३३॥

ज्ञानी सदेवगुरुसन्मतिधर्मशीलः शास्त्री दिनेशगुरुर्शुक्रशनीन्दुपुत्रैः ।
साधुः सुखी बहुधनप्रबलश्च विद्वानिन्दुज्ञदेवगुरुदानवपूजितारैः ॥ ३४॥

पङ्चग्रहिरेकगृहोपयातैस्चन्द्रज्ञजीवासुग्वन्धमन्दैः ।
सर्वत्र पूज्यो विकलेक्षणश्च महीपतुलुअः सचिवोऽथवा स्यात् ॥ ३५॥

अथ षड्ग्रहयोगाः ।

सूर्येन्द्वारबुधामरेज्यभृगुजैरेकर्क्षगैस्तीर्थकृ-
लातोऽरण्यागिरिप्रदेशनिलयः स्त्रीपुत्रवित्तान्वितः ।
शुक्रेन्द्वर्कबुधामरेज्यदिनकृत्पुत्रैः शिरोरोगवा-
नुन्मादप्रकृतिश्च निर्जनधरावासो विदेशं गतः ॥ ३६॥

जीवज्ञारुणभूमिजासितसितैः सङ्चारशीलः सुधी-

रिन्दुज्ञारसितार्किदेवगुरुभिस्तीर्थाटनः स्याद् व्रती ।
जीवारेन्दुरवीन्दुजारुणसुतैश्चोरः परस्त्रीरतः
कुष्ठी बान्धवदूषितो गतसुतो मूर्खो विदेशं गतः ॥ ३७॥

नीचोऽन्यकर्मनिरतः क्षयपीनसार्तो निन्द्यो महीसुतरवीन्दुसितासितज्ञैः ।
मन्त्री कलत्रधननन्दनभोदहीनः शान्तः सितासितकुजारुणजीवचन्द्रैः ॥ ३८॥

अथ मेषादिराशिस्थाग्रहफलम्

जातः स्वल्पधनस्तु गानरसिको विद्याधनक्लेशधी-
रज्ञः सर्वकलारसज्ञैचतुरो हैरण्यर्कः साहसी ।
सम्पूज्यः कुवणिक्क्रियासु कुशलः पुत्रादिभाग्यच्युतः
श्रीमांस्तोयकृषिक्रियादिभिरिने मेषादिराशिस्थिते ॥ ३९॥

स्वर्क्षे भूपकृषिक्रियाटन्धनः शुक्रर्क्षगे कामधीः
सौम्यर्क्षे परिदीनवाक्कर्टकभे राजप्रियो वित्तवान् ।
सिंहे भूमिसुते तु निर्भयधनो जैवे जितारिः सुखी
कुम्भे दुर्जनसेवितो मृगगते भूपोऽथवा तसमः ॥ ४०॥

कौजे चन्द्रसुतेऽधनः सितगृहे विद्वान्नृयुग्मे सुखी
कर्किस्थे निजवित्तहा हरिगते जातो वधूनिजितः ।
कन्यास्थे सुगुणाकरो गतभयश्चापे नृपालप्रियो
मीनस्थे जितसेवकः शनिगृहे शिल्पी परप्रेश्यकः ॥ ४१॥

सेनावित्तसुताधिकः गुरुणवान् दाता कुजर्क्षे गुरौ
तेजस्त्री सितभे परिच्छद्सुहृत्ताराउतर्क्षं गते ।
प्राज्ञः पुत्रधनश्च कर्किणि घटे भोगी यशस्वी हरौ
राजा राजसमोऽथवा निजगृहे नीचोऽटनः केशधीः ॥ ४२॥

जारः श्रीमतिमित्रबन्धुविभवो विद्याधनज्ञानवान्
भीरुर्मन्दसुतोऽतिनीचविहिताचारो नृपालंप्रियः ।
दुष्टस्त्रीगणसेवितो जनपतिर्भोगी कमारीरतः
श्रीविद्यागुणशीलवान् भृगुसुते मेषादिराशिस्थिते ॥ ४३॥

मुर्खो नातिधनो गतस्वसुतधीरम्बासुखप्रच्युतोऽ-
नार्ययः स्वल्पधनात्मजो गुणपुरग्रामाग्रणीरुग्रधीः ।
जातः पुत्रकलत्रवित्तविभवो राजप्रियो वित्तवान्
तेजोराजगुणाधिको रविसूते मेषादिराशिस्थिते ॥ ४४॥

यदुक्तमुडुनाथस्य फलं मेषादिराशिषु ।
तदंशकफलं चात्र परिचिन्त्य वदेद् बुधः ॥ ४५॥

अथ दृष्टिफलम् ।

पापेक्षिते गगनगामिनि दुष्टरोगी जातः स्वधर्धगुणविचयशोविहीनः ।
पापान्विते तु परवित्तवधूविलोलः पारुष्यवाक्कपटबुद्धियुतोऽलसः स्यात् ॥ ४६॥

यदि शुभकरदृष्टे खेचरे जातमर्तः सुतधनयुतभोगी सुन्दरो राजपूज्यः ।
परिभवरहितः स्थात्सौम्यखेतोपयाते जितरिपुरिह धर्माचारवानिङ्गितज्ञः ॥ ४७॥

अथ चन्द्रस्य दृष्टिफलम् ।

चन्द्रे मेषगते कुजादिस्वचरैरालोकिते भूपति-
र्विद्वान् राजसमः समस्तगुणवान् चोरो दरिद्रो भवेत् ।
निस्वस्थेयनृमान्यभूपधनिकप्रेष्यो वृषस्थे तथा
युग्मस्थे विकलो नृपः सुमतिमान् धीरः खलो निर्धनः ॥ ४८॥

कर्कस्थे शशिनि क्षमासुतमुस्वैरालोकिते शौर्यवा-
नार्यश्रेष्ठलविर्महीपतिर्योजीवी सनेत्रामयः ।
भुपः पण्डितवाग् धनी नरपतिः पापी विभुः सिंहगे
कन्यायां धनिको विभुः प्रभुसमो विद्वान् विशीलः सुखी ॥ ४९॥

तौलिस्थे हिमगौ बुधादिशुभदैरालोकिते स्यात् क्रमाद्
भूपः स्वर्णकरो वणिक्कुजरविच्छायासुनैर्वङ्चकः ।
कीटस्थे शशिनि द्विमातृपितृको राजप्रियो नीचकृ-
द्रोगी निर्वनिको नृपालसचियो दृष्टे बुधादिग्रहैः ॥ ५०॥

चन्द्रे धनुःस्थे शुभदृष्तियुक्ते विद्याधनज्ञानयशोबलाढ्यः ।
दृष्टे कुजादित्यदिनेशपुत्रैः सभाशठः पण्यवधूरतः स्यात् ॥ ५१॥

राजा महीपतिर्विद्वान् धनी निर्धनिको विभुः ।
कुजादिग्रहसन्दृष्टे मकरस्थे निशाकरे ॥ ५२॥

कुम्भस्थिते निशानाथे शुभदृष्टे यशोधनः ।
जातः परवधूलोलः पापखेटनिरीक्षिते ॥ ५३॥

मीनस्थे शुभवीक्षिते हिमकरे हास्यप्रियो भूपति-
र्विद्वान् पापनिरीक्षिते परुषवाक् पापात्मको जायते ।
पापांशे खलवीक्षिते शठमतिर्जातोऽन्यजायारतः
सौम्याम्शे शुभवीक्षिते हिमकरे जातो यशस्वी भवेत् ॥ ५४॥

राशिदृष्टिफलं यत्तदंशकेपु च योजयेत् ।
भवन्ति शुभदाः सर्वे शुभदृग्योगसंयुता ॥ ५५॥

अथ लग्नादिभावगतग्रहफलम् ।

मार्तण्डो यदि लग्नगोऽल्पतनयो जातः सुखी निर्घृणः
स्वल्पाशी विकलेक्षणो रणतलश्लाधी शुशीलो नटः ।
ज्ञानाचाररतः सुलोचनशयःस्वातन्त्रशकस्तूच्चगे
मीने स्त्रीजनसेवितो हरिगते राव्यान्धको वीर्यवान् ॥ ५६॥

क्षीणे रशिन्युदयगे वधिरोऽङ्गहीनः प्रेष्यश्च पापसहिते तु गतायुरेव ।
स्वोच्चस्वर्के धनयशोबहुरूपशाली पूर्णे तनौ यदि चिरायुरुपैति विद्वान् ॥ ५७॥

क्रूरः साहसिकोऽटनोऽतिचपलो रोगी कुजे लग्नगे
विद्यावित्ततपःस्वधर्मनिरतो लग्नस्थिते बोधने ।
जीवे लग्नगते चिरायुरमलज्ञानी धनी रूपवान्
कामी कान्तवपुः सदारतनयो विद्वान् विलग्ने भृगौ ॥ ५८॥

दुर्नासिको वृद्धकलत्ररोगी मन्दे विलग्नोपगतेऽङ्गहीनः ।
महीपतुल्यः सुगुणाभिरामो(आभो)जातः स्वतुङ्गोपगते चिरायुः ॥ ५९॥

क्रूरो दयाधर्मविहीनशीलो राहौ विलग्नोपगते तु रोगी ।
केतौ विलग्ने सरुजोऽतिलुब्धः सौम्येक्षिते राजसमानभोगी ॥ ६०॥

रविक्षेत्रोदये राहू राजभोगाय सम्पदि ।
स्थिरार्थपुत्रान् कुरुते मन्दक्षेत्रोदये शिखी ॥ ६१॥

अथ द्वितीयस्थग्रहफलम् ।

त्यागी धातुद्रव्यवानिष्टशत्रुवाग्मी वित्तस्थानगे चित्रभानौ ।
कामी कान्तश्चारुवागिङ्गितज्ञो विद्याशीलो वित्तवान् वित्तगेन्दौ ॥ ६२॥

धतोर्वादकृषिक्रियाटनपरः कोपी कुजे वित्तगे

बुद्ध्योपर्जितवित्तशीलगुणवान् साधुः कुटुम्बे बुधे ।
वाग्मी भिजनसौम्ख्यवित्तविपुलस्त्वागी धनस्थे गुरौ
विद्याकामकलाविलासधनवान्वित्तस्थिते भार्गवे ॥ ६३॥

असत्यवादी चपलोऽटनोअधनः शनौ कुतुम्बोपगते तु वङ्चकः ।
विरोधवान्वित्तगते विधुन्तुदे जनापराधी शिखिनि द्वितीयगे ॥ ६४॥

अथ तृतीयस्थग्रहफलम् ।

शूरो दुर्जनसेवितोऽतिधनवान् त्यागी तृतिये रवौ
चन्द्रे सोदरराशिगेऽल्पधनिको बन्धुप्रियः सात्त्विकः ।
स्व्यातोऽपारपराक्रमः शठमतिर्दुश्चिक्ययाते कुजे
भायाकर्मपरोऽटनोऽतिचपलो दीनोऽनुजस्थे बुधे ॥ ६५॥

भ्रातृस्थानगते गुरौ गतधनः स्त्रीनिर्जितः पापकृत
शुक्रे सोदरगे सरोषवचनः पापी वधूनिजितः ।
अल्पाशी धनशीलवंशगुणवान् भ्रातृस्थिते भानुजे
राहौ विक्रमगेऽतिवीर्यधनिकः केनौ गुणी वित्तवान् ॥ ६६॥

सोदराRातिगः शुक्रः शोकरोगभयप्रदः ।
तत्रैव शुभकारी स्यात् पुरतो यदि भास्करात् ॥ ६७॥

अथ चतुर्थस्थग्रहफलम् ।

हृद्रोगी धनधान्यबुद्ध्गिरहितः क्रूरः सुखस्थे रवौ
विद्याशीलसुखान्वितः परवधूलोलश्चतुर्थे विधौ ।
भौमे बन्धुगते तु बन्धुरहितः स्त्रीनिर्जितः शौर्यवान्
बन्धुस्थे शशिजे विबन्धुरमलज्ञानी धनी पण्डितः ॥ ६८॥

वाग्मी धनी सुखयशोबलरूपशाली जातः शठप्रकृतिरिन्द्रगुरौ सुखस्थे ।
स्त्रीनिर्जितः सुखयशोधनबुद्धिविद्यावाचालको भृगुसुते यदि बन्धुयाते ॥ ६९॥

आचारहीतः कपटी च मातृक्लेशान्वितो भानुसुते सुखस्थे ।
राहौ कलत्रादिजनावरोधी केतौ सुखस्थे च परापवादी ॥ ७०॥

अथ पङ्चमस्थग्रहफलम् ।

राजप्रियश्चलबुद्धियुक्तः प्रवासशीलः सुतगे दिनेशे ।

मन्त्रक्रियासक्तमना दयालुर्धनी मनस्वी तनये मनीन्दौ ॥ ७१॥

क्रूरोऽटनश्चपलसाहसिको विधर्मा भोगी धनी च यदि पङ्चमगे धराजे ।
मन्वाभिचारकुशलः सुतदारवित्तविद्यायशोबलयुतः सुतगे सति ज्ञे ॥ ७२॥

मन्त्री गुणी विभवासार समन्वितः स्यादल्पात्मजः सुरगुरौ सुत राशियाते ।
सत्पुत्रमित्रधनवानतिरूपशाली सेनातुरङ्गपतिराय्मजगे च शुक्रे ॥ ७३॥

मत्तश्चिरायुरसुखी चपलश्च धर्मि जातो जितारिनिचयः सुतगेऽर्कपुत्रे ।
भीरुर्द्दयालुरधनः सुतगे फणीशे केतौ शठः सलिलभीरुरतीव रोगी ॥ ७४॥

अथ षष्ठस्थग्रहफलम् ।

कामी शूरो राजपूज्योऽभिमानी ख्यातः श्रीमान् शत्रुर्याते दिनेशे ।
अल्पायुः स्यात् क्षीणचन्द्रेऽरिसंस्थे पूर्णे जातोऽतीव भोगी चिरायुः ॥ ७५॥

स्वामी रिपुक्षयकरः प्रबलोदराग्निः श्रीमान् यशोबलयुतोऽवनिजे रिपुस्थे ।
विद्याविनोदकलहप्रियकृशालो बन्धूपकाररहितः शशिजेऽरियाते ॥ ७६॥

कामी जितारिरबलोऽरिगतेऽमरेज्ये शोकापवादसहितो भृगुजे रिपुस्थे ।
बह्वशनो विषमशीलसपवभीतः कामी धनी रविसुते सति शत्रुयाते ॥ ७७॥

राहौ रिपुस्थानगते जीतारिश्चिरायुरत्यन्तसुखी कुलीनः ।
बन्धुप्रियोदारगुणप्रसिद्धविद्यायशस्वी रिपुगे च केतौ ॥ ७८॥

अथ सप्तमस्थग्रहफलम् ।

स्त्रीद्वेषी मदनस्थिते दिनकरेऽतीव प्रकोपो खल-
श्चन्द्रे कामगते दयालुरटनः स्त्रीवश्यको भोगवान् ।
स्त्रीमूलप्रविलापको रणरुचिः कामस्थिते भूमिजे
व्यङ्गः शिल्पकलाविनोदचतुरस्तारासुतेऽस्तं गते ॥ ७९॥

धीरश्चारुकलत्रवान् पितृगुरुद्वेषी मदस्थे गुरौ
देश्यास्त्रीजनवल्लभश्च सुभगो व्यङ्गः सिते कार्मगे ।
भाराध्वश्रमतसप्तधीरधनिको मन्दे मदस्थानगो
गर्वी जारशिस्वामिनिः कणिपतौ कामस्थिते रोगवान् ॥ ८०॥

अनङ्गभावोपगते तु केतौ कुदारको वा विकलत्रभोगः ।

निद्री विशीलः परिदीनवाक्यः सदाऽटनो मूर्खजनाग्नगण्यः ॥ ८१॥

अथ आष्यमस्थग्रहफलम्

मनोऽभिरामः कलहप्रवीणः पराभवस्थे च रवौ न तृप्तः ।
रणोत्सुकस्त्यागविनोदविद्याशीलः शशाङ्के सति रन्ध्रयाते ॥ ८२॥

विनीतवेषो धनवान् गनेषो महीसुते रन्ध्रगते तु जातः ।
विनीतबाहुल्यगुणप्रसिद्धो धनी सुधारश्मिसुतेऽष्टमस्थे ॥ ८३॥

मेधावी नीचकर्मा यदि दिविजगुरौ रन्ध्रयाते चिरायु-
र्दिर्घयुः सर्वसौख्यातुलबलधनिको भार्गवे चाष्टमस्थे ।
शूरो रोषाग्न्गण्यो विगतबलधनो भानुजे रन्ध्रयाते
रहौ क्लेशापवादी परिभवगृहगे दीर्घसूत्रश्च रोगी ॥ ८४॥

केतौ यदा रन्ध्रगृहोपयाते जातः परद्रव्यवधूरतेच्छुः ।
रोगी दुराचाररतोऽतिलुब्धः सौम्येक्षितेऽतीव धनी चिरायुः ॥ ८५॥

अथ नवमस्थग्रहफलम् ।

आदित्ये नवमस्थिते पितृगुरुद्वेषी विधर्मश्रित-
श्चन्द्रे पैत्रिकदेवकार्यनिरतस्त्यागी गुरुस्थे यदा ।
भूसूनौ यदि पित्र्यनिष्टसहितः ख्यातः शुभस्थानगे
सौम्ये धर्मगते तु धर्मधनिकः शास्त्री शुभाचारवान् ॥ ८६॥

ज्ञानी धर्मपरो नृपालसचिवो जीवे तपःस्थानगे
विद्यावित्तकलत्रपुत्रविभवः शुक्रे शुभस्थे सति ।
मन्दे भाग्यगृहस्थिते रणतलक्यातो विदारो धनी
भाग्यस्थे भुजगे तु धर्मजनकद्वेषी यशोवित्तवान् ॥ ८७॥

केतौ गुरुस्थानगते तु कोपी वाग्मी विधर्मी परनिन्दकः स्यात् ।
शूरः पितृद्वेषकरोऽतिदम्भाचारो निरुत्साहरतोऽभिमानी ॥ ८८॥

अथ दशमस्थग्रहफलम् ।

मानस्थिते दिनकरे पितृवित्तशील-विद्याशोबलयुतोऽवनिपालतुल्यः ।
चन्द्रे यदा दशभगो धनधान्यवस्त्र-भूषावधूजविलासकलाविलोलः ॥ ८९॥

मेषूरणस्थेऽवनिजे तु जाताः प्रतापवित्तप्रबलप्रसिद्धाः ।
व्यापारगे चन्द्रसुते समस्त-विद्यायशोवित्तविनोदशीलः ॥ ९०॥

सिद्धारम्भः साधुवृत्तः स्वधर्मी विद्वानाद्यो मानगे चामरेज्ये ।
शुक्रे कर्मस्थानगे कर्षकाङ्च स्त्रीभूलाद्वा लब्धवित्तो विभुः स्यात् ॥ ९१॥

मन्दे यदा दशमगे यदि दण्डकर्ता मानी धनी निजकुलप्रभवश्च शूरः ।
चोरक्रियानिपुणबुद्धिरतो विशीलो मानं गते फणिपतौ तु रणोत्सुकः स्यात् ॥ ९२॥

सुधीर्बली शिल्पविदात्मबोधी जनानुरागी च विरोधवृत्तिः ।
कफात्मकः शूरजनाग्नगण्यः सदाऽटनः कर्मगते च केतौ ॥ ९३॥

अथ लाभस्थग्रहफलम् ।

भानौ लभगते तु वित्तविपुलस्त्रीपुत्रदासान्वितः
सन्तुष्तश्च विषादशीलधनिको लाभस्थिते शीतगौ ।
आर्थस्थे धरणीसुते चतुरवाक्कामी धनी शौर्यवान्
सौम्ये लाभगृहं गते निपुणधीविद्यायशस्वी धनी ॥ ९४॥

आयस्थेऽमरमन्त्रिणि प्रबलधीविख्यातनामा धनी
लाभस्थे भृगुजे सुखी परवधूलोलाटनो वित्तवान् ।
भोगी भूपतिलब्धवित्तविपुलः प्राप्ति गते भानुजे
राहौ श्रोत्रविनाशको रणतलश्लाधी धनी पण्डितः ॥ ९५॥

उपान्त्ययाते शिखिनि प्रतापी परप्रियश्चान्यजनाभिवन्धः ।
सन्तुष्टचित्तः प्रभुरल्पभोगी शुभक्रियाचाररतः प्रजातः ॥ ९६॥

अथ व्ययस्थग्रहफलम् ।

व्ययस्थिते पूषणि पुत्रशालो व्यङ्गः सुधीरः पतितोऽटनः स्यात् ।
चन्द्रेऽन्व्ययाते तु विदेशवासी भौमे विरोधी धनदारहीनः ॥ ९७॥

बन्धुद्वेषकरो धनी विगतधीस्तारासुते रिष्फगे
चार्वाकी चपलोऽटनः खलमतिर्जीवे यदाऽन्त्यं गते ।
शुक्रे बन्धुविनाशकोऽन्त्यगृहगे जारोपचारोऽधनी
मन्दे रिष्फगृहं गते विकलधीर्मूर्खो धनी वङ्चकः ॥ ९८॥

विधुम्तुदे रिष्फगते विशीलः सम्पत्तिशाली विकलश्च साधुः ।

पुराणवित्तस्थितिनाशकः स्याच्चलो विशीलः शिखिनि व्ययस्थे ॥ ९९॥

उच्चस्थे दिननायके यदि धनी सेनापतिः शीतगौ
मिष्टान्नान्बरभूषणः कुतनयो भूनन्दने शौर्यवान् ।
सौम्ये वंशविवर्द्धनो जनपतिर्धीमाङ्जितारिः सिखी
जीवे वंशकरः सुशीलचतुरो विद्वान्नृपालप्रियः ॥ १००॥

शुक्रे स्वोच्चगते विलासव्निितासङ्गितनृत्यप्रियो
मन्दे ग्रामपुराटवीक्षितिपतिर्जातः कुमारीरतः ।
राहौ चोरजनाधिपः कुलवरः शूरः कुकर्मी धनी
केतौ चोररतस्तु हीनधरणीपालप्रियो जायते ॥ १०१॥

एकः स्वतुङ्गगः स्वेटो मित्रग्रहनिरीक्षितः ।
जनयत्यवनीशं तं पूज्यं शस्यं सुहृद्युतम् ॥ १०२॥

तुङ्गस्थैकवियच्चरे बलयुते जातः स धन्यो धनी
साम्न्त्ः स्वचरद्वये त्रिषु थदा जातोऽवनीशो भवेत् ।
उच्चस्थेषु चतुर्ग्नद्वेषु बलवान् केन्द्रेषु भूपालरात्
पङ्चव्योमचरेषु तुङ्गभवनप्राप्तेषु लोकेश्वरः ॥ १०३॥

अथ मूलत्रिकोणगतफलम् ।
मार्तण्डे यदि मूलत्रिकोणगृहगे जातो धनी वन्दित-
श्चन्द्रे वित्तसुखान्वितश्च रुधिरे कोपी दयावर्जितः ।
ताराजे धनिको जपी सुरगुरौ भोगी नृपालप्रियः
शुक्रे ग्रामपुराधिपस्तणिजे शूरस्तु राहौ धनी ॥ १०४॥

अथ स्वक्षेत्रस्थफलम् ।

स्वर्क्षे भास्वति चारुमन्दिरदुराचारोऽग्नकामी विधौ
तेजोरूपधनी कुजे कृषिबलख्यातो बुधे पण्डितः ।
जीवे काव्यकलागमश्रतपरः शुक्रो मनस्वी धनी
मन्दे चण्डपराक्रमो गतसुखी राहौ यशोवित्तवान् ॥ १०५॥

स्वजातिकल्पाधिकपूज्यवित्तो धनाधिकः क्ष्मापतितुल्यभूपः ।
एकादिभिः स्वर्क्षगतैर्ग्रहेन्द्रैर्जालक्रमेणैव भवेन्मनुष्यः ॥ १०६॥

अथ मित्रक्षेत्रस्थफलम् ।

मित्रक्षेत्रगते रवौ दृढसुहृदाता यशस्वी भेवे-
त्तारेशे बहुमानसौख्यधनिको जातो धरानन्दते ।
वित्तागारसुहृत्प्रियः शशिशुते चातुर्यहास्याग्रणी-
जीवे शिष्टरतः सिते सुतसुखी मन्दे परान्नो धनी ॥ १०७॥

स्व्यातः सुखी सुहृत्प्रीतश्चातुर्यगुणवान् सुधीः ।
भोगी परान्नभोक्ता च मित्रराशिफलं क्रमात् ॥ १०८॥

परद्रव्योपभोक्ता स्यादेको मित्रक्षगो ग्रहः ।
द्वौ सुहृद्वित्तभोगी स्यात् त्रयः स्वार्जितवित्तभुक् ॥ १०९॥

सुहृच्चतुष्तये दाता गणपः पङ्चखेचराः ।
चमूपः पङ्ग्रहाः सप्त ग्रहाः स्याद्धरणिपतिः ॥ ११०॥

त्रिभिरुच्चंगतैर्भूपस्त्रिभिर्मन्त्री स्वराशिगैः ।
त्रिभिरस्तं गतैर्दासः त्रिभिनर्चिं गतैर्जडः ॥ १११॥

अथ शत्रुक्षेत्रस्थफलम् ।

शत्रुक्षेत्रगते रवौ पितृसुखत्यागी च सेवापरः
शीतांशौ यदि मातृदुःखनिरतो हृद्रोगशाली भवेत् ।
भूसूनौ विकलोऽकृतज्ञमलिनः सौम्ये सुखी पापधी-
र्जैवे भव्यरतः सिते तु भृतको मन्देऽध्वशोकाकुलः ॥ ११२॥

मिश्रदा रिपुगाः पङ्च षड् ग्रहा हीनसौख्यदाः ।
सर्वदुःकराः सप्त मूढाः कुर्वन्त्यशोभनम् ॥ ११३॥

अथ नीचस्थफलम् ।

नीचस्थे दिननायके तु पतितोऽबन्धुः प्रवासे रतः
शीतांशौ सरुजोऽल्पपुण्यधनवान् भौमे कृतघ्नो धनी ।
क्षुद्रो बन्धुविरोधकृच्छिशसुते जीवेऽपवादी खलः
शुक्रे दुःखरतः शनौ गतधनस्त्रीको विप्रन्नः खलः ॥ ११४॥

स्वेषूच्चभावेषु फलं समग्नं त्रिकोणवत्स्यात्फलमंशकेषु ।
स्वराशितुल्यं सुहृदंशकेषु नीचारिमूढेष्वरिराशितुल्यम् ॥ ११५॥

स्वोच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः ।

फलं सम्पूर्णपादोनदलपादाल्पनिष्फलम् ॥ ११६॥

केन्द्रत्रिकोणगाः सर्वे शुभदा बलिनः शुभाः ।
त्रिषदायगताः पापा बलिनो यदि शोभनाः ॥ ११७॥

षड्पङ्चकत्रिचतुरक्षिवियङ्चरेन्द्रसम्पर्कजद्यचरभावभवानि यानि ।
तुङ्गादिकग्रहफलानि च कीर्तितानि प्रद्योतनप्रसुखलब्धवरप्रसादात् ॥ ११८॥

इति जातकपारिजाते द्व्यादिग्रहयोगासयेऽष्टमेऽध्याये विमला हिन्दी टिका समाप्ता ॥ ८॥

अथ मान्द्यब्दादिफलाध्यायः ॥ ९॥

मान्द्यब्दादिफलानि वाच्मि गुलिके लग्नस्थिते मन्दधी
रोगी पापयुते तु वङ्चनपरः कामी दुराचारवान् ।
वित्तस्थे विषयातुरोऽट्नपरः क्रोधी दुरालापवान्
पापव्योमचरान्विते गतधनो विद्याविहीनोऽथवा ॥ १॥

विरहगर्वभदादिगुणैर्युतः प्रचुरकोपधनार्जनसम्भ्रमः ।
विगतशोकभयश्च विसोदरः सहजैधामनि मन्दसुते यदा ॥ २॥

हिबुक्रभवनसंस्थे मन्दजे वीतविद्याधनगृहसुखबन्धुक्षेत्रयातोऽटनः स्यात् ।
तनयैभवनयाते मन्दसूनौ विशीलश्चलमतिरधबुद्धिः स्वल्पपुत्रोऽल्पजीवी ॥ ३॥

बहुरिपुगणहन्ता भूपविद्याविनोदी यदि रिपुर्गृहयाते मन्दपुत्रे तु शूरः ।
कलहकृदिनपैत्रे कामयाते कुदारः सकलजनविरोधी मन्दबुद्धिः कृतघ्नः ॥ ४॥

विकलनयनवक्रः स्वल्पदेहोऽष्टमस्थे गुरुजनपितृहन्ता नीचकृत्यो गुरुस्थे ।
अशुभशनसमेतः कर्मगे मन्दसूनौ निजकुलहितकर्माचारहीनो विमानः ॥ ५॥

अतिसुखधनतेजोरूपवान् लाभयाते दिनकरसुतपुत्रे चाग्नजं हन्ति जातः ।
विषयरहितवेषो दीनवाक्यः प्रवीणो निखिलधनहरः स्यान्मदजेरिःफयाते ॥ ६॥

मान्दित्रिकोणोपगते विलग्ने रद्द्वादशांशे यदि वा नवांशे ।
मान्द्यान्विता मान्दियुतर्क्षनाथाह् सर्वे सदाऽनिष्टकरा भवन्ति ॥ ७॥

अथ ग्रहयुक्तमान्दिफलम् ।

संयुक्ते यदि भास्करेण गुलिके जातः पितृद्वेषको
मातृक्लेशकरस्तु शीतरुचिना भौमेन वीतानुजः ।
सोन्मादः शशिजेन देवगुरुणा पास्वण्डको दूषकः
शिक्रेण प्रमदाकृतामयहतो नीचाङ्गनावल्लभः ॥ ८॥

जातः सौख्यरतस्तु मन्दतनये मन्देन युक्ते यदा
सर्पेणैव विध(घ)प्रदस्तु शिखिना वह्निप्रदो जायते ।
भिक्षुः स्याद्विषनाडियुक्तगृहगे भूपालकोऽपि ध्रुवं
जातस्योपखगान्विता गगनगाः कुर्वन्त्यनिष्टं फलम् ॥ ९॥

अथ संवत्सरफलम् ।

प्रभवशरदि जातः साहसी सत्यवादी सकलगुणसमेतः कालविधर्मशाली ।
विभवशरदि कामी निर्मलो नित्यतुष्टः प्रबलधनसमेतो बन्धुविद्यायशस्वी ॥ १०॥

शुक्लाब्दे परदारको गतबलस्त्यागी मनस्वी भवे-
न्मन्त्री कार्यपरोऽतिभाषणपटुर्जातः प्रमोदाभिधे ।
धर्मी दानपरायणः सुतधनः शान्तः प्रजोत्मत्तिजो
नितिज्ञो निपुणः कृपालुरनिशं चाङ्गिरसाब्दे धनी ॥ ११॥

जातः श्रीमुखत्रत्सरे परवधूलोलः शुचिर्वित्तवान्
योगी राजकरो महाधनबलख्यातो भवाब्दे भवः ।
लुब्धश्चङ्चलधीः कृशामयतनुः क्रोधी युवब्दे भिषक्
जातो धातुभवोऽन्यदारनिरतः कार्यार्थवादी शठः ॥ १२॥

श्रीमानीश्वरवत्सरे बलमतिजार्तो गुणग्राहकः
सत्कर्मा बहुधन्यवत्सरभवो भोगी वणिगवृत्तिमान् ।
क्रूरः पापरतः प्रभाथिशरदि क्रोधी विबन्धुः सुखी
जातो विकमवत्सरे यदि धनी सेनापतिः शौर्यवान् ॥ १३॥

वृषरदि दरिद्रोवीतलज्जो विकर्मा दिनकरसमतेजोरूपवान् वित्रभानौ ।
यदि निजकुलविद्याचारधर्मः सुभानौ बहुधनबलशाली तारणब्दे धिवेकी ॥ १४॥

जातः पार्थिववत्सरे नरपतिः श्रीमानतुल्यः श्सुखी
कामी भीरुरशीलवित्तगुणवान् पापी व्ययाब्दे यदि ।
वाग्मी सर्वजिदब्दकेऽतिबलवान् शास्त्री गुणी तत्त्ववित्
सम्पन्न्प् यदि सर्वधरिजनितः शिल्पी नृपालप्रियः ॥ १५॥

शोकी दुष्टपरोऽतिपापनिरतः क्रूरो विरोध्यब्दके
मायावी मदनातुरो विकृतिजो मन्त्रक्रियातन्त्रधीः ।
निर्मोही विगुणोऽतिदीनवचनः पापी स्वराब्दे खलः
स्रवानन्दकरो नृपप्रियनरो मन्त्रार्थविन्नन्दने ॥ १६॥

विजयशरदि धर्मो सत्यसम्पन्नशाली
यदि जयशरदिस्याद्राजतुल्यो नृपो वा ।
मदनरतिविलो९लो मन्मथाब्दे जितारि-
र्गुणधनरहितः स्याद्दुर्भस्वाब्दे विशीलः ॥ १७॥

दुष्टास्मा यदि हेमलम्बिजनितः कृष्यादिकर्मोत्सुकः
श्रीमान्विप्रजनाश्रितः फलपरित्यागी विलम्ब्यब्दके ।
रोगी भीरुरवित्तवान चलमतिर्नीचो विकार्यब्दके
शार्वर्यामतिवित्तभोगसुमनाः सत्यव्रताचारवान् ॥ १८॥

शान्तोदारकृपाकरः प्लवभवेः शूरः स्वधर्माश्रितो
जातः स्त्रीजनवङ्चितः शुभकृति प्राज्ञः शुभाङ्गः सुधीः ।
ज्ञानी शोभकृति क्षितीशगुणवान् विद्याविनोदप्रियो
दुर्भोगी परदारकः शठभतिः क्रोध्यब्दजः क्रोधयुक् ॥ १९॥

मानी हास्यरसप्रियो गुणधनश्लाधी च विश्वावसौ
दुष्टाचारपरः पराभवशरज्जातः कुलध्वंसकः ।
कामी बन्धुरतः प्लवङ्गजनितो बालप्रियो मन्दधी-
र्देवाराधनतत्परोऽतिसुभगः शौर्यान्वितः कीलके ॥ २०॥

शान्तः सर्वजनप्रियोऽतिधनिकः सौम्यान्दजो धैर्यवान्
नानाशास्त्रविशारदो विकलधीः साधारणाब्दे नरः ।
आशालुब्ध विरोधकृद्भवनरः क्रोधी दरिद्रोऽटनो
दुशीलः परिधाविवत्सरभवः पारुष्यवाग्वित्तवान् ॥ २१॥

जातो बन्धुविरागकृत् परवधूलोलः प्रमादीजनि-
मोर्दात्मा निखिलागमश्रुतिपरश्चानन्दजस्तत्त्ववित् ।
पापी राक्षसवत्सरे यदि वृथालापोऽपकारी सतां
दाता दानगुणान्वितोऽनलभवः शान्तः सदाचारवान् ॥ २२॥

योगी पिङ्गलवत्सरे जितमना जातस्तपस्वी भवेत्
कालज्ञो यदि कालयुक्तशरदि श्रीभ्प्गसत्कर्मवान् ।

सिधार्थो गुरुदेवभक्तिनिरतः सिद्धाथिजातः सुधी-
र्जरो रौद्रेसमुद्रवः कुटिलधीर्मानी दुराचारवान् ॥ २३॥

कामी दुर्गतिवत्सरे जडमतिः शोकाभितप्तः खलः
स्थूलोरूदरबाहुमस्तकतनुः स्थाद्दुदुभौ वित्तवान् ।
प्राज्ञः सत्यरतः सुखी च रुधिरोद्रार्यब्दजो वित्तवान्
शान्तो बन्धुजनप्रियोऽतिसुभगो रक्ताक्षिजः शीलवान् ॥ २४॥

जातो जारः क्रोधनाब्दे कुमार्गी बन्धुद्वेषी चोरनिष्ठारतः स्यात् ।
शिष्टाचारः सुप्रसन्नः सुरूपो मानी वीताराितिरिगः क्षयाब्दे ॥ २५॥

अथायनफलम् ।

उत्तरायनसमुद्भवः पुमान् नयोगनिरतश्च निष्ठिकः ।
दक्षिणयनभवः प्रगल्भवः भेदबुद्धिरभिमानतत्परः ॥ २६॥

अथर्तुफलम् ।

दीर्घानिको वसन्तसमये जातः सुगन्धप्रियो
ग्रिष्मतै धनतोयसेव्यचतुरो भोगी कृशाङ्गः सुधी ।
क्षारशीरकटुप्रियः उवचनो वर्षर्तुजः स्वच्छधीः
पुण्यात्मा सुभ्खः सुखी यदि शरत्कालोद्भवः कामुकः ॥ २७॥

योगी कृशाङ्गः कृषक्ष्च भोगी हेमन्तकालप्रभवः समर्थः ।
स्नानक्रियादानरतः स्वधर्मी मानी यशस्वी शिशिरर्तुजः स्यात् ॥ २८॥

अथ मासफलम्

चैत्रे स्त्रवकलागमश्रुतिपरो नित्योत्सवः श्रीरतो
वैशाखे यदि सर्वशास्त्रकुशलः स्वातन्त्रिको भूपतिः ।
ज्येष्ठे मासि चिरायुरर्थतनयी मन्त्रक्रियाकोविद-
श्राषाढेऽतिधनी कृपालुरनिशं भोगी परद्वेषकः ॥ २९॥

जातः श्रावणमासि देवधरणीदेवार्चने तत्परो
नानादेशरतश्च भाद्रपदजस्तन्त्री मनोराज्यवान् ।
मासो चाश्वयुजि स्वक्रीयजनविद्वेषी दरिद्रश्चलः
पुष्टाङ्गः कृषको विशालनयनो वित्ताधिकः कार्तिके ॥ ३०॥

सुरगुरुपितृभक्तो मार्गशीर्षो च धर्मी धनगुणबलशाली तुङ्गनासस्तु पुष्ये ।
खलमतिरतिधर्माचारवान् माधमासि प्रतिदिनमुपकर्ता फाल्गुने गानलोलः ॥ ३१॥

अथ पक्षफलम् ।

व(ब)क्षपक्षे यदि पुत्रपौत्रधनाधिको धर्मरत्ः कृपालुः ।
स्वकार्यवादी निजभातृभक्तः स्वबन्धुवैरी यदि कृष्णपक्षे ॥ ३२॥

अथ कालफलम् ।

जातः प्रत्युषसि स्वधर्मनिरतः सत्कर्मजीवी सुखी
मध्याह्ने यदि राजतुल्यगुणवान् जातोऽपराहे धनी ।
सायंकालभवः सुगन्धवनितालोलः खलात्माऽटनो
रात्रौ तत्फलमेव सौख्यबहुलः सूर्योदये जायते ॥ ३३॥

अथ तिथिफलम्

महोद्योगी जातः प्रतिपदि तिथौ पुण्यचरितो-
द्वितीयायां तेजःपशुबलयशोवित्तविपुलः ।
तृतीयायां पुण्यप्रबलभयशीलश्च पटुवाक्
चतुर्थामाशालुस्त्वटनवतुरो मन्त्रनिपुणः ॥ ३४॥

पश्चम्यामखिलागमश्रुतिरतः कामी कृशाङ्गश्चलः
षष्ठ्यामल्पबलो महीपतिसमः प्राज्ञोऽतिकोपान्वितः ।
सप्तम्यां कठिनोरुवाग् जनपतिः श्लेष्मप्रधानो बली
चाष्टम्यामतिकामुकः सुतवधूलोलः कफात्मा भवेत् ॥ ३५॥

ख्यातो दिव्यतनुः कुदारतनयः कामी नवम्यां तिथौ
धर्मत्मा पटुवाक्कलत्रत्नयः श्रीमान् दशम्यां धनी ।
देवब्राह्मणपूजको हरितिथौ दासान्वितो वित्तवान्
द्वादश्यामतिपुण्यकर्मनिरतस्त्यागी धनी पण्डितः ॥ ३६॥

त्रयोदश्यां लुब्धप्रकृतिरतिकामी च धन्वान्
चतुर्दश्यां कोपी परधनवधूको गतमनाः ।
अमायामाशालुः पितृसुरसमाराधनपरो
धनी राकाचन्द्रे यदि कुलयशस्वी च सुमनाः ॥ ३७॥

अथ वारफलम् ।

मानी पिङ्गलकेशलोचचनतनुश्चादित्यवारे विभुः
कामी कान्तवपुर्दयालुरनिशं शीतांशुवारोद्भवः ।
क्रूरः साहसवादकार्यनिरतो भूसूनुवारे सदा
देवब्राह्मणपूजक्ः सुव्रचनः सौम्य्स्य वारोदये ॥ ३८॥

यज्वा भूपतिवल्ल्भश्च गुणवान् स्यातो गुरोर्वसरे
धान्यक्षेत्रधनाश्रितः सितदिने सर्वप्रियः कामधीः ।
मन्दप्रायमतिः परान्नधनभुग् वादप्रवादान्वितो
द्वेषी बन्धुजनावरोधकुशलो मन्दस्य वारोद्भवः ॥ ३९॥

अथ नक्षत्रनामानि ।

तुरङ्गदस्त्राश्वियुगश्विनीहया यमः कृतान्तो भरनी च याम्यभम् ।
हुताशनओऽग्निर्बहुला च कृत्तिका विधिर्विरिङ्चः शकटं च रोहिणी ॥ ४०॥

सौम्यश्चान्द्राग्ह्रायण्युडुपमृगशिरस्तारका रौद्रमार्द्रा
चादित्यं तत्पुर्नवस्विति सुरजननी तिष्यपुष्यामरेज्याः ।
आश्लेपाहिर्भुजङ्गः पितृजनकमघाः फल्गुनी भाग्यभं स्य-
र्दयम्णश्चोत्तराख्यं भगमिति कथिनं भानुहस्तारुणार्काः ॥ ४१॥

त्वष्टा च चित्रासुरवर्द्धकी तु स्वाती मरुद्वातसमीरणाख्याः ।
वायुः समीरः परतो विशाखा द्विदैवतेन्द्राग्निकशूर्पभानि ॥ ४२॥

अनूराधा मैत्रं त्वथ कुलिशताराः शतमस्वः
सुरस्वामी जेष्ठा परमसुरमूलक्रतुभुजः ।
पयःपूर्वाषढा सलिलजलतोयानि च समु-
त्तराषाढा विश्वं परमभिजिदाहुर्मुनिगणाः ॥ ४३॥

श्रोणाविष्णुहरिश्रुतिश्रवणभान्याहः श्रविष्ठा वसु
प्राचेताः शततारका वरुणभं चाजैकपादोऽजपान् ।
पूर्वप्रोष्ठपदर्क्षकं परमहिर्बुध्न्योत्तरा प्रोष्ठपान्
पूषारेवतिपौष्णमानि मुनिभिः सक्कीर्तितानि क्रमात् ॥ ४४॥

अथ गण्डान्तताराः

मूलावासवयोर्मघाभुजगयोः पौष्णाश्वयोः सन्धिजं
गण्डान्तं प्रहरप्रमाणमधिकानिष्टप्रदं प्राणिनम् ।

ज्येष्ठादानवतारसन्धिघटिका चाभुक्तसंज्ञा भवेत्
तन्नाहीप्रभवाङ्गनासुतपशुप्रेष्याः कुलध्वंसकाः ॥ ४५॥

अथ ज्येष्ठाफलानि

विभक्ता दशभिर्ज्येष्ठानक्षत्राखिलनाडिकाः ।
आद्यंशे जननीमाता द्वितीये जननीपिता ॥ ४६॥

तृतीये जननीभ्राता यदि माता चतुर्थके ।
पङ्चमे जाततनयः षष्थे गोत्रविनाशकः ॥ ४७॥

सप्तमे चोभयकुलं त्वष्टमे वंशनाशनम् ।
नवमे स्वशुरं हन्ति सर्व हन्ति दशांशके ॥ ४८॥

भौमवासरयोगेन ज्येष्ठाजा ज्येष्ठसोदरम् ।
भानुवासरयोगेन मूलजा स्वशुरं हरेत् ॥ ४९॥

ज्येष्ठाद्यपादेऽग्रजमाशु हन्याद् द्वितीयपादे यदि तत्कनिष्ठम् ।
तृतीयपादे पितरं निहन्ति स्वयं चतुर्थे मृतिमेति जातः ॥ ५०॥

अथ मूलफलानि ।

मूलाद्यपादे पितरं निहन्याद् द्वितीयके मातरमाशु हन्ति ।
तृतीयजो वित्तविनाशकः स्याच्चतुर्थपादे समुपैति सौख्यम् ॥ ५१॥

मूलर्क्षनिखिला नाड्यस्तिथिसङ्ख्याविभाजिताः ।
आद्ये पिता पितृभ्राता तृतीये भगिनीपतिः ॥ ५२॥

पितामहश्चतुर्थे तु माता नश्यति पङ्चमे ।
षष्ठे तु मातृभगिनी सप्तमे मातुलस्तथा ॥ ५३॥

अष्टमांशे पित्रृव्यस्त्री निखिलं तु नवांशके ।
दशमे पशुसंधतो भृत्यस्त्वेकादशांशके ॥ ५४॥

द्वादशे तु स्वयं जातस्तज्ज्येष्टस्तु त्रयोदशे ।
चतुर्दशे तद्भगिनी त्वन्ते मातामहस्तथा ॥ ५५॥

आश्लेषाद्ये न गण्डं स्याद्धनगण्डं द्वितीयके ।

तृतीये मातृगण्डम् तु पितृगण्डं चतुर्थके ॥ ५६॥

मूलामधाश्रिचरणे प्रथमे पितुश्च पौष्णेन्द्रयोश्च फणिनस्तु चतुर्थपादे ।
मातुः पितुः स्ववपुषोऽपि करोति नाशं जातो यथा निशि दिनेऽप्यथ सन्ध्ययोश्च ॥ ५७॥

दिवा जातस्तु पितरं रात्रिजो जननी तथा ।
आत्मानं संध्ययोर्हन्ति नास्ति गण्डे विपर्ययः ॥ ५८॥

ऋक्षस्यान्ते भवेद्रात्रावादौ यदि दिने तथा ।
संध्यासु ऋक्षसन्धौ तु तदेतद् गण्डलक्षणम् ॥ ५९॥

पूर्वाषाडे धनुर्लग्ने जातः पितृविनाशकः ।
पुष्ये कर्कटके लग्नेपितृमृत्युकरो भवेत् ॥ ६०॥

पूर्वाषाढे तु पुष्ये च पितरं मातरं सुतम् ।
मातुलं च शिशुर्हन्यात्प्रथमांशकतः क्रमात् ॥ ६१॥

उत्तराफाल्गुनीताराप्रथमे चरणे यदि ।
तिष्यनक्षत्रमध्यस्थपादयोरुभयोर्यदि ॥ ६२॥

पादे तृतीये चित्रायाः पूर्वार्द्धे यमभस्य च ।
तृतीयांशेऽर्कतारायश्चतुर्थांशेऽन्त्यभस्य च ।
जातस्तु पितरं हन्ति जाता चेन्मातरन्तथा ॥ ६३॥

अथ गण्डकालः ।

षोडशाब्दास्तुरङ्गाद्ये मघाद्ये चाष्टवत्सराः ॥ ६४॥

एकाब्दः शक्रतारायां चत्वारस्त्वाष्ट्रमूलयोः ।
सार्पे वर्धद्वयं चैव रेवत्यामेकवत्सरः ॥ ६५॥

द्वौ मासौ चोत्तरादोषः पुष्यर्क्षे तु त्रिमासकम् ।
नवमे मासि पितरं पूर्वाषाढोद्भवं हरेत् ॥ ६६॥

हस्तर्क्षे यदि जातस्तु पितरं द्वादशाब्दके ।
अभुक्तमूलजः पुत्रः पितरं हन्ति तत्क्षणात् ॥ ६७॥

अभुक्तमूलजनितो यदि जीवति मानवः ।

निजवंशकरः श्रीमान् बहुसेनाधिपोऽथवा ॥ ६८॥

अथ तिथिदोषः ।

कृष्णपक्षे चतुर्दश्यां षडण्शे प्रथमे शुभम् ।
द्वितीये पितरं हन्ति तृतीये मातरं तथा ॥ ६९॥

चतुर्थे मातुलं हन्ति पङ्चमे भ्रातृनाशनम् ।
षष्ठे यदि शिशुं हन्ति गण्डदोष इतीरितः ॥ ७०॥

अमायां तु प्रजातानां गजानां वाजिनां तथा ।
गवां च महिषादीनां मनुष्यानां विशेषतः ॥ ७१॥

सिनीवालीप्रजातानां त्याग एव हि सर्वदा ।
विशेषाञ्च कुहूत्थानां शान्तिं कुर्याद्विधानतः ।
नारी विनाऽवशेषाणां परित्यागो विधीयते ॥ ७२॥

अथ योगदोषः ।

पितृजन्मर्क्षकर्मर्क्षजातः पितृविनाशकः ॥ ७३॥

जन्मर्क्षशकतक्कग्नजातः सद्यो मृतिप्रदः ।
मुसले मुद्गरे योगे जातः शोभननाशकृत् ॥ ७४॥

विष्टयां दरिद्रमाचष्टे गुलिकेऽङ्गविहीनवान् ।
रिक्ताय पिण्ढतां यानि पहुः स्याद्यमकण्टके ॥ ७५॥

ग्रहपीडितनक्षत्रे जातो रोगनिपीदितः ।
ग्रहमुक्ते कान्क्षितर्क्षे दत्तपुत्रो भवेत्सुतः ॥ ७६॥

व्यतीपातेऽङ्गहीनः स्यात् परिधे मृत्युमाप्नुयात् ।
धैधृतौ पितरं हन्ति विष्कम्भे चार्थहानिकृत् ।
शूले तु शूलरोगी स्याद् गण्डे गण्डमवाप्नुयात् ॥ ७७॥

अथ दन्तोद्रमफलम् ।

सदन्तजातः कुलनाशकरी द्वितीयमासादिचतुष्टयान्ते ।
दन्तोद्भवो मृत्युकरः पितुः स्यात् षष्ठे शिशोस्तत्परतः शुभं स्यात् ॥ ७८॥

अथ जन्मतारादयः ।

जन्मर्क्षमाद्यं दशमन्तु कर्म सांज्ञतिकं षोडशभं वदन्ति ।
अष्टादश स्यात् समुदायसंज्ञमाधानमेकोनितविंशतिः स्यात् ॥ ७९॥

त्रयोविंशतिनक्षत्रं वैनाशिकमिनि न्मृतम् ।
जातिदेशाभिकात्व्याः पङ्चविशादिनारकाः ॥ ८०॥

ज्न्मतारादयो यन्य विद्धः पापवियञ्चरैः ।
सद्यो मृत्युकरास्तस्य शुभैः शुभफलप्रदाः ॥ ८१॥

अथ गण्डदोषापवादः ।

वैशाखे श्रावणे माधे फाल्गुन्यां व्योमसम्भवम् ।
आषाढपुज्यसौम्येषु ज्योष्ठे मासि च मानुषम् ॥ ८२॥

अश्वयुक्चैत्रकार्तिक्यां भाद्रे च विलसम्भवम् ।
मर्त्ये मृत्युर्गण्डदोषः पाताले नास्ति पुष्करे ॥ ८३॥

जातमात्रे कुमारस्य सुखमालोकयेत्पिता ।
पितृईणात्स विभुच्येत पुत्रस्य मुखदर्शनात् ॥ ८४॥

अथ नक्षत्रफलम् ।

अश्विन्यामतिबुद्धिवित्तविनयप्रज्ञायशस्वी सुखी
याम्यर्क्षे विकलोऽन्यदारनिरतः क्रूरः कृतघ्नो धनी ।
तजस्वी बहुलोद्भवः प्रभुसमोऽमुर्खश्च विद्याधनी
रोहिण्यां परन्ध्रिवत्कृशतनुर्वोधी परस्त्रीरतः ॥ ८५॥

चान्द्रे सौम्यमनोऽटनः कुटिलद्रक् कामातुरो रोगवान्
आर्द्रायामधनश्चलोऽधिकबलः क्षुद्रक्रियाशीलवान्
मूढात्मा च पुनर्वसौ धनबलख्यातः कविः कामुक-
स्तिष्ष्ये विप्रसुरप्रियः सधनधी राजप्रियो बन्धुमान् ॥ ८६॥

सार्पे मूढमतिः कृतघ्नवचनः कोपी दुराचारवान्
गर्वी पुण्यरतः कलत्रवशगो मानी मघायां धनी ।
फल्गुन्यां चपलः कुकर्मचरितस्त्यागी द्रिढः कामुको

भोगी चोत्तरफल्गुनीभजनितो मानी कृतज्ञः सुधीः ॥ ८७॥

हस्तर्क्षे यदि कामर्धमनिरतः प्राज्ञोपरर्ता धनी
चित्रायामतिगुप्तशीलनिरतो मानी परस्त्रीरतः ।
स्वात्यां देवमहीसुरप्रियकरो भोगी धनी मन्दधी-
र्गर्वी दारवशो जितारिरधिकक्रोधी विशाखोद्भवः ॥ ८८॥

मैत्रे सुप्रियवाग् धनी सुखरतः पूज्यो यशस्वी विभु-
र्ज्येष्ठायामतिकोपवान् परवधूसक्तो विभुधार्मिकः ।
मूलर्क्षे पटुवाग्विधूतकुशलो धूर्तः कृतघ्नो धनी
पूर्वापाढभवो विकारचरितो मानी सुखी शान्तधीः ॥ ८९॥

मान्यः शान्तगुणः सुखी च धनवान् विश्वर्क्षजः पण्डितः
श्रोणायां द्विजदेवभक्तिनिरतो राजा धनी धर्मवान् ।
आशालुर्वसुमान् वसूडुजनितः पीनोरुकण्ठः सुखी
कालज्ञः शाततारकोद्भवनरः शान्तोऽल्पभुक् साहसी ॥ ९०॥

पूर्वप्रोष्ठपदि प्रगल्भवचनो धूर्तो भयार्तो मृदु-
श्चाहिर्बुध्न्यजमानवो मृदुगुणस्त्यागी धनी पण्डितः ।
रेवत्यामुरुलाङ्छनोपगतनुः कामातुरः सुन्दरो
मन्त्री पुत्रकलत्रमित्रसहितो जातः स्थिरः श्रीरतः ॥ ९१॥

अथ राशिफलम् ।

मेषस्थे यदि शीतगौ च लघुभुक् कामी महोत्थाघ्नजो
दाता कान्तयशोधनोरुचरणः कन्याप्रजो गोगते ।
दिर्घयुः सुरतोपचारकुशलो हास्यप्रियो युग्मके
कामासक्तमनोऽटनः सुवचनश्चन्द्रे कुलीरस्थिते ॥ ९२॥

सिंहस्थे पृथुलोचनः सुवदनो गम्भीरदृष्टिः सुखी
कन्यास्थे विषयातुरो ललितवाग्विद्याधिको भोगवान् ।
तौलिस्थेऽमरविप्रभक्तिनिरतो बन्धुप्रियो वित्तवान्
कीटस्थे शशिनि प्रमत्तहृदयो रोगी च लुब्धोऽटनः ॥ ९३॥

सौम्याङ्गो रुचिरेक्षणः कुलवरः शिल्पी धनुःस्थे विधौ
गीतज्ञः पृथुमस्तको मृगगते शास्त्री परस्त्रीरतः ।
कुम्भस्थे गतशीलवान् बुधजनद्वेषी च विद्याधिको
मीनस्थे मृगलाङ्छने वरतनुर्विद्वान् बहुस्त्रीपतिः ॥ ९४॥

अथ राश्यंशकफलम् ।

सेनानीर्धनवान् पिशङ्गनयनश्चोरश्च मेषांशके
पीनस्कन्धमुखांसकोऽसितवपुर्जातो वृपांशे विधौ ।
चार्वङ्गः प्रभुसेवको लिपिकरो युग्मांशके पण्डितः
श्यामाङ्गः पितृपुत्रसौख्यरहितश्चन्द्रे कुलीरांशके ॥ ९५॥

पीनाङ्गोन्नत्नासिको धनबलख्यातश्च सिंहांशके
कन्यांशे मृदुभाषणः कृशतनुध्य तक्रियाकोविदः ।
कामी भूपतिसेवकः सुनयनश्चन्द्रे तुलांशे स्थिते
कीतांशे विकलोऽधनः कृशतनुः सेवाऽटनो रोगवान् ॥ ९६॥

चापांशे कृशदीर्घबाहुद्रुतनुगस्त्यागी तपस्वी धनी
लुब्धः कृष्णतनुः सदारतनयश्चन्द्रे मृगांशे यदि ।
मिथ्यावादरतः स्वदारववशगः कुम्भांशगे शीतगौ
मीनांशे मृदुवाग्दीनवचनस्तीर्थाटनः पुत्रवान् ॥ ९७॥

अथ योगफलम् ।

विष्कम्भे जितशत्रुरथपशुमान् प्रीतौ परस्त्रीवश-
ज्वार्युष्मन्प्रभवश्रिरायुरगदः सौभाग्यजातः सुखी ।
भोगी शोभनयोगजो वधरुचिर्जातोऽतिगण्डे धनी
धर्माचाररतः सुकर्मजनितो धृत्यां परस्त्रीधनः ॥ ९८॥

शूले कोपवशानुगः कलहकृद्गण्डे दुराचारवान्
वृद्धौ पण्डितवाग् ध्रुवेऽसिधनवान् व्याधातजो घातकः ।
ज्ञानी इर्षणयोगजः पृईथुयशा विज्ञे धनी कामुकः
सिद्धौ सर्वजनाश्रितः प्रभुसमो भायी व्यतीपातजः ॥ ९९॥

दुष्कामी च वरीयजस्तु परिधे विद्वेषको वित्तवान्
शास्त्रज्ञः शिवयोगजश्च धनवान् शान्तोऽवनीशप्रियः ।
सिद्धे धर्मपरायणः क्रतुपरः साध्ये शुभाचारवान्
चार्वङ्गः शुभयोगजश्च धनवान् कामातुरः श्लेष्अकः ॥ १००॥

शुक्ले धर्मरतः पटूत्ववचनः कोपी चलः पण्डितो
मानी ब्रह्मभवोऽतिगुप्तधनिकस्त्यागी विवेकप्रभुः ।
ऐन्द्रे सर्वजनोपकारचरितः सर्वज्ञधीवित्तवान्

मायावी परदूषकश्च बलवान् त्यागी धनी वैकृतौ ॥ १०१॥

अथ करणफलम् ।

भवकरणभवः त्याद्वालकृत्यः प्रतापी-विनयचरितवेषो बालवे राजपूज्यः ।
गजतुरगसमेतः कौलवे चारुकर्मा-मृदुपटुवचनः स्यात्तैतिले पुण्यशीलः ॥ १०२॥

गरजकरणजातो वीतशत्रुः प्रतापी-वणिजि निपुणवक्ता जारकान्ताविलोलः ।
निखिलजनविरोधी पापकर्माऽपवादी-परिजनपरिपूज्यो विष्टिजातः स्वतन्त्रः ॥ १०३॥

कालज्ञः  शकुनीभवः स्थिरसुखी जातस्त्वनिष्टाकरः
सर्वज्ञश्च चतुष्पदे तु ललितप्रज्ञायशोवित्तवान् ।
तेजस्वी वसुमानतीव बलवान् वाचालको नागके
किंस्तुध्रेपरकार्यकृच्चपलधीर्हास्यप्रियो जायते ॥ १०४॥

अथ लग्नफलम् ।

बन्धुद्वेषकरोऽटनः कृशतनुः क्रोधी विवाद्प्रियो
मानी दुर्बलजानुरस्थिरधनः शूरश्च मेषोदये ।
गोमान् देवगुरुद्विजार्च्चनरतः स्वल्पात्मजः शान्तधी-
विद्यावादरतोऽटनश्च सुभगो गोलग्नजः कामुकः ॥ १०५॥

भोगी बन्धुरतो दयालुरधिकः श्रीमान् गुणि तत्त्वविद्
योगात्मा सुजनप्रियोऽतिसुभगो रोगी च युग्मोदये ।
मिष्टान्नाम्बरभूषणो ललितवाक्कापट्यधीर्धर्मवान्
जातः स्थूलकलेवरोऽन्यभवनप्रीतः कुलीरोदये ॥ १०६॥

जातः सिंहविलग्नकेऽल्पतनयः सन्तुष्टधीहिंसकः
यूरो राजवयीकरो जितरिपुः कामी विदेयं गतः ।
कन्शालग्नभवः क्रिशासुनिपुणः श्रीमान् सुधीः पण्डितः
मेधावी वनिताविलासरसिको बन्धुप्रियः सात्त्विकः ॥ १०७॥

ललितवदननेत्रो राजपूज्यश्च विद्वान्-मदनरतिविलोलः स्त्रीधनक्षेत्रशाली ।
विरलदशनमुख्यः शान्तबुद्धिर्विषादी-चलमतिरतिभीरुर्जायते तौलिलग्ने ॥ १०८॥

मूर्खः क्रूरविलोचनोऽतिचपलो मानी चिरायुर्धनी
विद्वान् वृश्चिकलग्नजश्च सुजनद्वेषी विवादप्रियः ।
प्राज्ञस्चापविलग्नजः कुलवरः श्रीमान् यशोवित्तवा-

न्ना कुम्भीरसमुद्भवश्च रमणीलोलः शठो दीनवाक् ॥ १०९॥

अन्तःशठः परवधूरतिकेलिलोलः-कार्पण्यशीलधनवान् घटल ग्रजातः
मीनोदयेऽल्परतिरिष्टजनानुकूल॰स्तेजोबलप्रचुरधान्यधनश्च विद्वान् ॥ ११०॥

अथ होराफलम् ।

ओजे राशौ भानुहोराप्रजातः-क्रूरः कामी वित्तवान् राजपूज्यः
वाग्मी दाता चारुदेहो दयालु-र्जारस्त्रीकश्चन्द्रहोरा यदि स्यात् ॥ १११॥

मार्तण्डहोराजनितः सभर्क्षे-मन्त्री कृतज्ञचपलोऽतिभीरुः ।
चन्द्रस्य होराप्रभवः प्रगल्भ-वाक्योऽलसः पुण्यवधूरतः स्यात् ॥ ११२॥

अथ द्रेष्काणफलम् ।

कण्ठीरवाजघटकीटमृगाननाद्या मीनालिसिंहवणिगन्त्यगता दृकाणाः ।
क्रूरा भवन्ति कटकस्य सरीसृपस्य-मध्यस्थितश्च बहुशः प्रवदन्ति सन्तः ॥ ११३॥

कुलीरमीनादिगतौ दृकाणौ-मीनाङ्गनामन्दिरमध्यगौ च ।
मोयुग्मयोरन्त्यगतत्रिभागौ-भवन्ति षट् तोयचरा दृकाणाः ॥ ११४॥

मेषास्विगोकुम्भगद्वितीय-स्तुलाधरस्त्रीयुगपूर्वभागः ।
चापाङ्गनातोयधरान्त्याता-दृकाण्संज्ञाः प्रभवन्ति सौम्याः ॥ ११५॥

मृगाजकर्क्यन्त्यगता दृकाणा-वृषस्य चापस्य च पूर्वयातौ ।
नृयुग्मतौलीहरिमध्यगास्ते/विमिश्रसंज्ञा इति संवदन्ति ॥ ११६॥

क्रूरद्रेष्काणजातः स्वलमतिरटनः पापकर्माऽपवादी
दाता भोगी दयालुः कृषिसलिलधनस्तोयभागे विशीलः ।
सौम्यद्रेष्कणजो यः सुखधनतनयश्चारुरूपो दयालु-
जार्तो मिश्रे कुशीलः परयुवतिरतः क्रुरदृष्टिश्चलात्मा ॥ ११७॥

अथ बवांशफलम् ।

मार्तण्डांशे खलात्मा बलसुतधनवान् पिङ्गाक्षश्च कामी
चन्द्रांशे भोगशाली परयुवतिरतः पण्डितो गोधनाढ्यः ।
भौमांशे क्रूरकर्मा चलमतिरटनः पित्तरोगी च लुब्ध-
स्त्यागी रोगी बुधांशे ललिततनुरतिख्यातविद्यायशस्वी ॥ ११८॥

जीवांशे यदि हेमकेशतनुगः श्रेष्ठः सुधी रूपवान्
मन्त्री पण्डितवाक् प्रसन्नवदनो राजाधिराजप्रियः ।
शुक्रांशे परकामिनीजनरतस्त्यागी सुखी पण्डितो
मन्दांशे यदि पापबुद्धिरधनः स्थूलदिजो रोगवान् ॥ ११९॥

अथ द्वादशांशफलम् ।

जाती मेषद्वादशांशे खलात्मा-चोरः पापाचारधर्मानुरक्तः ।
स्त्रीवित्ताढ्यो रोगवानुक्षभाम्शे-युग्मांशे तु द्यूतकृत्यः सुशीलः ॥ १२०॥

दुष्टाचारः क्र्कटांशे तपस्वी-सिंहे भागे राजकृत्यः सुशूरः ।
द्यूताचारः स्त्रीरतः कन्यकांशे-व्यापारी स्यात् तौलिभांशे धनाढ्यः ॥ १२१॥

कीतांशके धनरुचिर्विटचारनाथ-श्रापांशके पितृमहीसुरदेवभक्तः ।
सस्याधिपो मृगमुखांशभवः सभृत्यः-कुम्भे खलस्त्वनिमिषे धनिकश्च विद्वान् ॥ १२२॥

अथ त्रिंशांशफलम् ।

त्रिंशांशे धरणिसुतस्य चपलः काठिन्यवाक् क्रूरधी-
र्मन्दस्याटनतत्परो मलिनधीर्जीवांशके वित्तवान् ।
सौम्यांशे गुरुदेवभाक्तिनिरतः साधुप्रियो बन्धुमान्
कामी कान्तवपुः सुल्ही च भृगुजत्रिंशांशके जायते ॥ १२३॥

अथ वेलाफलम् ।

वाग्मी शिष्टाचारधर्मस्तपस्वी नित्योत्साही निर्मलो दानशीलः ।
तेजोविद्यारूपवान् सत्यवादी वीतारातिः सत्त्ववेलाप्रजातः ॥ १२४॥

रजोवेलाजातः सुखधनयशोरूपबलवान्
जितारातिः कामातुरमतिरबन्धुप्रियमनाः ।
तमोवेलाजातः परधनवधूको गतसुखः
शठस्वामी बन्धुद्विजगुरुविरोधी चपलधीः ॥ १२५॥

तमः सत्त्वरजोवेलास्तमः सत्त्वं रजस्तमः ।
भवन्त्यर्कदिनादीनामर्धयामैरनुक्रमात् ॥ १२६॥

अथ कालहोराफलम् ।

मन्त्रिमङ्गलमार्तण्डशुल्क्रज्ञेन्दुशनैश्चराः ।
आरभ्य वारतो होरा रात्रौ पङ्चमवारतः ॥ १२७॥

क्लेशायासः सम्पदः शोकरोगं विद्यावित्तं सर्वसम्पत् प्रभुत्वम् ।
जायासौख्यं वित्तनाशं दिनेशाज्जातस्यैतत्कालहोराफलं स्यात् ॥ १२८॥

मार्तण्डसूनुतनयाश्रयभावजानि संवत्सरायनमुखप्रभवाखिलानि ।
होरादिवर्गजनितानि फलानि यानि संकीर्तितानि विंमुख्यवरप्रसादात् ॥ १२९॥

इति नवमोऽध्यायः ॥ ९॥

अथाष्टकवर्गाध्यायः ॥ १०॥

चक्रं विलिव्य मह लग्नदिवाकराद्यैः सूर्यादिलग्नभवनान्तवियच्चराणाम् ।
वाक्याष्टकोपगनवर्णनियोजिनाश्चेद्भिन्नाष्टवर्गजनिनाग्विलबिन्धवः स्युः ॥ १॥

देवो धवो धीगवशस्तमो रमा धूलिः क्रमाडुणकादिबिन्दवः ।
सालोलमंख्याः भमुदायांबन्दवः भवाष्टवर्गं गमुदायसंज्ञकः ॥ २॥

मेषादियद्गृहगता वसुसङ्ख्ययातास्तद्भावपुष्टिबलवृद्धिकरा भवन्ति ।
षद्पङ्चसप्तसंहितानि शुभ्रप्रदानि त्रिद्व्येकबिन्दुयुतभानि न शोभनानि ॥ ३॥

मिश्रं फलं भवति सागरबिन्दुयोगे रोगापवादभयदा यदि शून्यभावाः ।
एकादिबिन्दुयुतभानुमुखग्रहाणां भिन्नाष्टवर्गजनि सर्वफलं प्रवचिम् ॥ ४॥

करोति नानाविधरोगदुःखभयाटनादीनि च सैकबिन्दुः ।
द्विको मनस्तापनृपालचोरकुताण्वादाशननाशनानि ॥ ५॥

त्रिकस्त्वसङ्चारकृशावलम्बकतेञ्रव्यकुलमानसानि ।
सुखासुखार्थव्ययवित्तलाभफलदः सागरबिन्दुकः स्यात् ॥ ६॥

सद्वस्त्रलाभसुतलालनसाधुसङ्गविद्याधननि कुरुते च सपङ्चबिन्दुः ।
षड्बिन्दुकस्तु नवमोहनरूपशीलसङ्ग्रामजिद्धनयशोबलवाहनानि ॥ ७॥

ससप्नबिन्दुस्तुरगादियानसेनाधनप्राभवशोभनानि ।

बिन्द्वष्टकः सप्तगुणाभिरामराजप्रतापं प्रकटीकरोति ॥ ८॥

शरादिबिन्दुस्थितराशियातः स्वकीयवर्गे शुभदस्तु नित्यम् ।
अतोऽन्यथा चेदफलप्रदाता गोचारतः शुन्यफले प्रमादी ॥ ९॥

स्वोच्चमित्रादिवर्गस्थाः केन्द्रादिबलसंयुताः ।
अनिष्टफलदाः सर्वे स्वल्पबिन्दुयुता यदि ॥ १०॥

दुष्टस्थानस्थिता ये च ये च नीचारिभांशगाः ।
ते सर्वे शुभदा नित्यमधिबिन्दुयुता यदि ॥ ११॥

दिनेशमुख्यग्रहवर्गकेषु यदा शनिः शून्यगृहं प्रयातः ।
करोति पित्रादिकभावजानामतीव रोगारिभयाकुलानि ॥ १२॥

लग्नं गते दिनकरे रिपुनीचभागे जातः कृशानुयुगबिन्दुयुते च रोगी ।
वाणादिबिन्दुसहितोदगे दिनेशे स्वोच्चेऽथवा निजगृहे नृपतिश्चिरायुः ॥ १३॥

केन्द्रत्रिकोणोपगते दिनेशे षट्पञ्चसप्ताष्टकबिन्दुवर्गे ।
रुद्रामलानीचलाब्दकेषु जातस्य् वा तज्जनकस्य मृत्युः ॥ १४॥

शोध्यावशिष्टद्वयबिन्दुयाते केन्द्रस्थिते सेन्दुशनीन्दुसूनौ ।
भानौ दशाब्दात्परतः समृद्धां तातस्य राज्यश्रियमाहुरार्याः ॥ १५॥

अथ चन्द्रफलम् ।

शून्यागारं तरणिशशिनोरष्टवर्गे तदीयो
मासो राशिः सकलशुभदे कर्मणि त्याज्य आहुः ।
यक्ष्मालस्यं शशिनि तनुगे सौकलोकाक्षिबिन्दौ
सप्तत्रिंशच्छरदि मरणं वित्रखेटान्विते च ॥ १६॥

केन्द्रत्रिकोणायगते शशाङ्के निचारिगे वृद्धिकलाविहीने ।
बिन्दुद्विके वा यदि सत्रिबिन्दौ तद्भावनाशं कथयन्ति तज्ज्ञाः ॥ १७॥

देवादिबिन्दुयुतकोणचतुष्टये वा लाभे विधौ बलयुते यदि भाववृद्धिः ।
बिन्दुद्वष्टके शशिनि केन्द्रगते तु जाता विद्यायशोधनबलप्रबला नरेन्द्राः ॥ १८॥

अथ भौमफलम् ।

स्वोच्चस्वके गुरुसुखोदयमानयाते बुन्द्वष्टके च यदि कोटिघनप्रभुः स्यात् ।
चापाजसिंहमृगकीटविलग्नसंस्थे भौमे चतुष्टयफलोपगते च राजा ॥ १९॥

बिन्द्वष्टके धरणिजेऽतिलघुक्षितीशो मानेऽथवा तनुगते च महीपतिः स्यात् ।
जातोऽवनीशकुलजो यदि देशनाथः स्वोच्चस्वराशिसहिते नृपचक्रवर्ती ॥ २०॥

अथ बुधफलम् ।

केन्द्रत्रिकोणे वसुबिन्दुके ज्ञे जातीयविद्याधिकभोगशाली ।
स्वोच्चादिकैकद्वितयत्रिबिन्दौ तद्भावववृद्धिर्नच भावहानिः ॥ २१॥

बिन्द्वाधिक्यं यत्तदागारमासे विद्यारम्भः सर्वविद्याकरः स्यात् ।
गोचारेण ज्ञस्यं शुन्यालयस्थे मन्दे बन्धुज्ञातिसम्पद्विनाशः ॥ २२॥

अथ गुरुफलम् ।

जीवाष्टवर्गाधिकबिन्दुराशौ लग्ने निषेकं कुरुते सुतार्थी ।
तद्राशिदिग्भागगृहस्थितानि गोवित्तयानानि बहूनि च स्युः ॥ २३॥

जीवाष्टवर्गलघुबिन्दुगृहोपयाते भानौ कृताखिलशुभानि विनाशितानि ।
पङ्चादिबिन्दिन्करिपुव्ययरन्ध्रगेज्ये जातश्चिरायुरतिवित्तजितारिकः स्यात् ॥ २४॥

स्वोच्चेऽथवा निजगृहे वसुबन्धुयुक्ते केन्द्रस्थिते सुरगुरौ गुरुभावगे वा ।
नीचारिभावमपहाय विमूढराशौ जातः स्वकीययशसा पृथिवीपतिः स्यात् ॥ २५॥

यदा महीदेवकुलप्रजाता तदीययोगे नरपालतुल्याः ।
कृतानि पुण्यप्रभवप्रसिद्धबुद्धिप्रतापानि गुणाभिरामाः ॥ २६॥

ससप्तबिन्दौ सह लक्ष्मणेन जीवे बहुस्त्रीधनपुत्रवन्तः ।
षड्बिन्दुके वाहनवित्तवन्तः सपङ्चबिन्दौ जयशीलवन्तः ॥ २७॥

अथ शुक्रफलम् ।

साष्टबिन्दुफलकोणकेन्द्रगे भार्गवे तु बलवाहनाधिपः ।
आयुरन्तमविनाशभोगवान् वित्तरत्नविभुरद्रिबिन्दुके ॥ २८॥

नीचास्तरिष्फनिधनोपगते तु काव्ये पूर्वोदितक्षितिपयोगविनाशनं स्यात् ।
शुक्रोऽल्पबिन्दुयुतमन्दिरदिग्वभागे स्त्रीवश्यहेतुशयनीयगृहं प्रशस्तम् ॥ २९॥

अथ शनिफलम् ।

कोणस्य शून्यतरराशिगते तु मने जातस्य मृत्युफलमाशुधनक्षयो वा ।
एकद्विलोकयुगबिन्दुयुते च केन्द्रे मुक्ते स्वतुङ्गभवने रविजेऽल्पमायुः ॥ ३०॥

षट्पङ्चनिदुसहिते तनुगे बलाढ्ये जन्मादिदुःखबहुलं धननाशमेति ।
मन्दे शरादिफलनीचसपत्नभावे जातश्चिरायुरतिभनवर्गकेन्द्रौ ॥ ३१॥

मूढारिनीचगृहगे शरवेदबिन्दौ दास्युष्ट्रवित्तहितास्तनये तनुस्थे ।
सौरेऽष्टबिन्दुगणिते परमन्त्रतन्त्रग्नामाधिपास्तु गिरिबिन्दुगृहे धनाढ्यः ॥ ३२॥

अथ प्रस्तारकम् ।

आलिख्य चक्रं नवपूर्वरेखा याम्योत्तरस्था दश च त्रिरेखाः ।
प्रस्तारकं षण्णवतिप्रकोष्टं पङ्क्त्यष्टकं चाष्टकवर्गजं स्यात् ॥ ३३॥

होराशशीबोधनशुक्रसूर्यभौमामरेन्द्राचिंतभानुपुत्राः ।
याम्यादिपङ्क्त्यष्टकराशिनाथाः क्रमेण तद्विन्दुफलप्रदाः सुय्ः ॥ ३४॥

सबिन्दुगः सर्वफलप्रदः स्यादबिन्दुको यद्यफलप्रदः स्यात् ।
अरातिनीचास्त्गतो नभोगः सबिन्दुकोऽपि प्रविलोपकर्ता ॥ ३५॥

अथ त्रिकोणशोधनम् ।

पङ्च प्राचीरालिखे(स्वे)द्वाणरंख्यास्तिर्यघेखा वर्जितान्तश्चतुष्काः ।
प्रागादीशा द्वादश व्योमवासा ज्योतिश्चक्रस्वामिनस्तूबराद्याः ॥ ३६॥

अजहरितुरगाङ्गैरुक्षकन्यामृगस्थैर्युगधटघटरूपैः कर्किकीटावसानैः ।
दिनकरसुखवर्गे तत्त्रिकोणोपयाता लघुतरसमशून्या बिन्दवः शोधिताः स्युः ॥ ३७॥

त्रिकोणभावेषु यदल्पबिन्दवस्तदीयबिन्दु भवतस्तु तावुभौ ।
न बिन्दुको यस्तु न शोधितेतरौ समानसंख्या यदि सर्वमुस्सृजेत् ॥ ३८॥

अथैकाधिपत्यशोधनम् ।

कण्ठीरवं कटक्भं च विना कुजादिकावासराशियुगलोपगबिन्दुसङ्घ्याः ॥

तत्तुल्यशून्यविघमाग्नसहग्रहाद्यास्त्वेकाधिपत्यपरिशोधितशेषिताः स्युः ॥ ३९॥

राशिद्वयं सद्युचरं न शोधयेदेकं द्वयोः शून्यममप्यशोधयेत् ।
कलाधिके खेटयुते परं त्यजेत् तुल्यानभोगद्वितयं परित्यजेत् ॥ ४०॥

सखेचराखेचरबिन्दुसाम्ये विशोधयेदग्रहबिन्दुसङ्ख्याम् ।
विखेटराशिद्वयबिन्दवो ये न्यूनाधिका न्यूनसमा विधेयाः ॥ ४१॥

खेटोपयाते लघुबिन्दुराशौ तत्तुल्यमायान्ति तदन्यसंख्याः ।
पूर्वं त्रिकोणं परिशोध्य पश्चादेकाधिपत्यस्य ततः प्रकल्प्याः ॥ ४२॥

शोध्यावशिष्टानि गुणीकृतानि मेषादिमानैर्गुणकं हि भानाम् ।
सूर्यादिकास्ते गुणिताः स्वमानैरेषाम् ग्रहाणां गुणकं वदन्ति ॥ ४३॥

शैलाशावसुसागराम्बरशरैः शैलाहिगोसायकै-
रीशद्वादशमिश्र राशिगुणकैर्मेषादिभानां क्रमात् ।
बाणैः पङ्चभिरष्ट्कैः शरनभःशैलेषुभिर्भिस्वरा-
देवं व्योमतलाधिवासगुणकैरायुर्विधानोदितैः ॥ ४४॥

तद्राशिखेटगुणकैक्यफलानि हृत्वा त्रिशद्भिरब्दचयमासदिनादिकाः स्युः ।
तद्द्वादशाधिकसमा यदि राशिमानैराहृत्य तत्समतयाऽनुहरेत्तदायुः ॥ ४५॥

उच्चं गतस्य द्विगुणं तदीयं नीचं गतस्यास्तगतस्य चार्द्धम् ।
अतोऽन्तराले त्वनुपात्यमायुरारस्य वक्रे द्विगुणिकृतं स्यात् ॥ ४६॥

मूलत्रिकोणनिजमित्रगृहोपगानां तुङ्गादिवर्गशुभयोगनिरीक्षितानाम् ।
उक्तप्रकारगणितागममायुरेव पापारिवर्गसहितस्य विपादमायुः ॥ ४७॥

रविमुख्यनभोगदत्तसंख्याः परमायुः शरदस्तु मानवानाम् ।
सविलग्नसमाश्च केचिदाहुर्गुरुमूलात्समुपैति तुल्यमायुः ॥ ४८॥

केन्द्रादन्यगते चन्द्रे सखेटे चाष्टवर्गजम् ।
आयुरेव नभःस्थाने शुभपापयुतेऽथवा ॥ ४९॥

रव्यादिखेटस्थितराशियाताः स्वकीयवर्गोपगबिनुसंख्याः ।
वेधाष्टवर्गप्रभवायुरब्दा भवन्ति सर्वे हरणक्रियाश्च ॥ ५०॥

तत्तत्कारकभावबिन्दुगुणितं शोध्यावशिष्टं फलं

विम्शत्या सह सप्तभिश्च विहृतं तच्च्जेषताराशनौ ।
तातस्तज्जननी सहोदरजनो बन्धुः सुतः स्त्रीस्वयं
तत्तुल्या विलयं प्रयान्ति विपुलश्रीनाशहेतुश्च वा ॥ ५१॥

इति भिन्नाष्टवर्गः ।

अथ समुदायाष्टकवर्गः ।

ततः समालिख्य भगोलचक्रं समस्तबिन्दुस्थितराशिकोष्ठम् ।
रव्यादिकानामजपूर्वकाणां बिन्दूपगस्थानफलं वदामि ॥ ५२॥

आपङ्चविंशति फलान्यफलान्यसत्यमात्रिंशदक्षसहितानि समध्यमानि ।
त्रिंशत्पराणि सुखवित्तयशस्कराणि तद्भाववृद्धिफलदानि च सामुदाये ॥ ५३॥

ये तुङ्गराशिस्वसुहृद्गृहत्वा ये कोणकेन्द्रोपचयस्थितश्चः
ये सौम्यवर्गादिबलोपयातास्ते नाशदाः लाघवबिन्दुकाश्चेत् ॥ ५४॥

ये मान्दिराशिपतिना सह बोधकाश्च
ते सर्वमुख्यफलदास्त्वदिबिन्दुकाश्चेत् ॥ ५५॥

मानस्थिताल्लाभगृहे बहुत्वे लाभाल्लघुत्वे यदि रिष्फराशौ ।
रिष्फोपयातादधिके विलग्ने जातः सुखी वित्तयशोबलाढ्यः ॥ ५६॥

खण्डत्रयं शफरकर्कटकीटकाद्यं तत्तच्चतुष्टयगृहोपगबिन्दुयुक्तम् ।
आद्यं च मध्यमवसानभिति प्रयुक्तं केचिद्व्ययादिकमिति प्रवदन्ति लोके ॥ ५७॥

बिन्दुं स्यक्त्वा रिष्फरन्ध्रोपयातं शिष्टं खण्डं केचिदिच्छन्ति सन्तः ।
तुल्यवल्पाधिक्यबिन्दुक्रमेण मिश्रं दुःखं सम्पदः स्यूर्नराणाम् ॥ ५८॥

सौम्याक्रान्तं यदि सुखकरं मिश्रदं मिश्रयोगं ।
खण्डं पापद्युचरसहितं क्लेशयोगाकरं स्यात् ।
बिन्दुस्वल्पे यदि निजमनस्तापवान् पापवादी
बिन्द्वाधिक्ये वयसि विपुलः श्रीसमेतः प्रजातः ॥ ५९॥

यावद्विन्दुर्लग्नगस्तावदीयसङ्ख्यातीते वत्सरे राजयानम् ।
वित्तं पुत्रं चातिविद्यामुपैति जातः सपद्योगशाली नरश्चेत् ॥ ६०॥

रिःफाधीशे मन्दगेहोदयस्थे होरारन्ध्रस्वामिनौ दुर्बलौ च ।

लग्ने यावदिबिन्दुसंख्यास्तदीया जातस्यायुर्वत्सराः सम्भवन्ति ॥ ६१॥

यानाधीशे लग्नगे वाहनस्थे लग्नाधीशे तद्ग्रहोपेतराश्योः ।
त्रिशत्संख्या बिन्दुवः सत्रयश्चेज्जाता राजश्रीनिदाना नरेशाः ॥ ६२॥

होराबन्धुप्राप्तिभावत्रयेषु त्रिंशन्मानाधिक्यबिन्दूपगेषु ।
जातस्तेजःश्रीबहुत्वं च राज्यं चत्वारिशद्वत्सरादूर्ध्वमेति ॥ ६३॥

यत्यङ्चविंशतिमुखास्त्रिदशान्तसंख्या बन्धुस्थिता नवमराशिकबिन्दवश्च ।
यद्यष्टकेन सह विशतिवत्सराणामन्ते परे शरदि वा नरवाहनाढ्यः ॥ ६४॥

देवाचार्ये वहनस्थे स्वतुङ्गे चत्वारिंशद्विन्दुसङ्ख्यवत्सरेशे ।
मेषगते लग्नगे वासरेशे जातो राज लक्षसंख्याश्वनायः ॥ ६५॥

चत्वारिंशद्विन्दुयुक्ते विलग्ने चापे जीवे भार्गवे मीनराशौ ।
स्वोच्चे भौमे कुम्भगे भानुपुत्रे जातः सर्वश्रीधरः सार्वभौमः ॥ ६६॥

क्रियादिराशित्रितयोपयाता भवन्ति पूर्वादिचतुर्दशश्च ।
फलाधिकं यदिशी तत्प्रदेशे धनादिवृद्धि समुपैति जातः ॥ ६७॥

लग्नादिशन्यन्तगतं तुरङ्गैः सङ्गुण्य ताराहृतलब्धयाते ।
रव्यादिपापे यदि कोणगे वा रोगादिपीडाविपुलं नराणाम् ॥ ६८॥

मन्दाइलग्नान्तफलं च तद्वल्लग्नान्तमारादुदयात्कुजान्तम् ।
शुभैक्यसंख्यागततारकायां शुभग्रहे सौख्यफलं वदन्ति ॥ ६९॥

शोध्यं राशिद्युचरणगुणकैः संगुणय्यैतदैक्यं
हत्वा शैलैरुडुगणहृतं लब्धमब्दादिकं स्यात् ।
मानाधिक्ये विशतमशते तारकायुर्वराङ्गैः
सगुण्याप्तं दिवसनिचयैमार्तुलैः शुद्धमायुः ॥ ७०॥

स्वल्पमध्यबहुमानव्त्सरा मण्डलोनयुतकर्मकल्पिताः ।
तुल्यकालमुपयान्ति सर्वतः सद्गुणोदयकटाक्षवीक्षणात् ॥ ७१॥

श्रीवैद्यनाथकृतजातकपारिजाते पराशरादिफलसाररसोपयाते ।
प्रस्तारभिन्नसमुदायकबिन्दुशीलः संकीर्तितस्तु सकलद्युचरप्रसादात् ॥ ७२॥

इति दशमोऽध्यायः ।

अथ प्रथमद्वितीयभावफलाध्यायः ॥ ११॥

होरलग्नात्मुख्यप्रभवशुभफलादीनि सर्वाणि पुंसां
चत्तद्भावोद्भवानि ह्यचरबलवशाद्यार्न नानि प्रवचिम् ।
ये ये भावाः सितज्ञामर्गुरुपतिभिः संयुता वीक्षिता वा
नान्यैर्दष्टा ज युक्ता यादि शुभफलदा मूर्तियावादिदेषु ॥ १॥

तन्वादिभावेषु शुभोदयेषु तद्भावनाथोपगतेक्षितेषु ।
तदुक्तभाबस्य समृद्धिरुक्ता नपापखेटेक्षितसंयुतेषु ॥ २॥

नीचस्थो रिपुराशिस्थः खेटो भावविनाशकः ।
मूलस्वतुङ्गमित्रस्थो भाववृद्धिकरो भवेत् ॥ ३॥

यद्भावनाथो रिपुरिष्फरन्ध्रे दुःस्थानपो तद्भवनस्थित॥।

तद्भावनाशं कथयन्ति तज्ज्ञाः शुभग्रहेण ॥॥॥॥॥॥। ॥ ४॥

यद्भावपे केन्द्रगते विलग्नात्त्रिकोणगे वा यदि सौम्यदृष्टे ।
तुङ्गादिवर्गोपगते बलाढ्ये तद्भावपुष्टिं फलमाहुरार्याः ॥ ५॥

तत्तद्भावत्रिकोणे सुखमदनगृहे वाऽस्पदे सौम्ययुक्ते
पापानां दृष्टेहीने भवनपसहिते पापखेटैरयुक्ते ।
भावानां पुष्टिमाहुः सकलशुभकरं चान्यथा चेत्प्रणाशं
मिश्रं मिश्रग्रहेन्दैरखिलमापि तथा मूर्तिभावादिकानाम् ॥ ६॥

नाशस्थानगतो दिवाकरकरच्छग्रस्तु यद्राशिपो
नीचारातिगतोऽथवा यदि शुभैः खेटैर्युक्तेक्षितः ।
तद्रावस्य विनाशनं मुनिगणाः शंसन्ति खेटैर्युतो
यद्यत्रापि फलप्रदो नहि तथा मूत्यार्दीभानां क्रमात् ॥ ७॥

दुःस्थाने वारिगे मूढे दुर्बले भावनायके ।
भावस्य सम्पदं कर्तुं न शक्ता भावमाश्रिताः ॥ ८॥

दुष्टस्थितो वापि यदा नभोगः पापोऽरिनीचांशकसंयुतो यः ।
स्वतुङ्गमित्रांशकराइयुक्तः शुभेक्षितो वा यदि शोभनः स्यात् ॥ ९॥

भवेशाक्रन्तराशीशे दुःस्थे भावस्य दुर्बलम् ।
स्वोव्च्चमित्रस्वराशिस्थे भावपुष्टिं वदेद् बुधः ॥ १०॥

वद्भावलाभधनविक्रमराशियाता यद्भावनाथसुहृदश्च तदुच्चनाथाः ।
तद्रभावपुष्टिबलमम्बरचारिणस्ते कुर्वन्ति मूढरिपुनीचविवर्जिताश्चेत् ॥ ११॥

भाविंशतुल्यः स्वलु वर्तमानो भावोद्भवं पूर्णफलं विघत्ते ।
भावोनके चाप्यधिके च खेटे त्रैराशिकेनात्र फलं विचार्यम् ॥ १२॥

अथ तनुभावफलम् ।

शरीरवर्णाकृतिलक्षणानि यशोगुणस्थानसुखासुखानि ।
प्रवासतिजोबलदुर्बलानि फलानि लग्नस्य वदन्ति सन्तः ॥ १३॥

नरश्चिरायुर्नृपपूजितः सुखी लग्ने भवेत्सौम्यगृहं यया तथा ।
लग्ने यदा स्वामिनिरीक्षिते धनी कुशाग्रबुद्धिः कुलकीर्तिवर्द्धनः ॥ १४॥

लग्नांशपाद्वीर्ययुतग्रहाद्वा तनुस्वरूपाकृतिलक्षणानि ।
वर्ण वदेच्चान्द्रनवांशनाथाद्विलग्नभात्सर्वशुभाशुभानि ॥ १५॥

त्रिकोणकेन्द्रे यादि लग्ननाथे शुभान्विते शोभनवीक्षिते वा ।
शुभग्रहागारगते बलाढ्ये चतुःसमुद्रान्तयशः समेति ॥ १६॥

होराधिनाथे रिपुरन्ध्ररिष्फे पापान्विते पापनिरीक्षिते वा ।
पापग्रहाणां भवनोपयते जातोऽप्रकाशो भवतीह भर्त्यः ॥ १७॥

कीर्तिस्थानपतौ विलग्नभवने जातः स्वयं कीर्तिमान् ।
वित्तस्थे तु विशेषकीतिसहितः स्वोच्चादिवर्गान्विते ।
दुःस्थे चङ्चलयात्रया हततनुर्जातोऽथवा दुर्जनः
केन्द्रे कोणगते शुभग्रहयुते यात्रासुखं जायते ॥ १८॥

होरास्वामिनि पङ्चमे यदि सुतस्थानेशयुक्तेऽथवा
भाग्ये वा यादि भाग्यपेन सहिते लग्ने यशस्वी पिता ।
भ्रात्रृस्थानपतौ विलग्नगृहगे तत्कारकभ्रातृपा-
वेकस्थौ कलशालिनौ च यदि वा तत्सोदरः कीर्तिसान् ॥ १९॥

विद्याधिपे वा यदि चन्द्रसूर्नो लग्ने सुखे लग्नपासंयुते वा ।

बलान्विते पापदृशा विहीने विद्यायशस्वी भवति प्रजातः ॥ २०॥

धर्मोदयेशौ नवमोदयस्थौ धर्मोदयेशौ तनुधर्मगौ वा ।
सुरेन्द्रवन्द्येक्षितसंयुतौ चेत् समेति जातश्चिरकालभाग्यम् ॥ २१॥

लग्नाधिपस्य व्ययगे तदुच्चमित्रे सुहृत्तङ्गस्वगेक्षिते वा ।
तद्राशिगे वा यदि मित्रखेटे तस्य स्थितिर्जन्मवसुन्धरायाम् ॥ २२॥

लग्नेशाद्व्ययपे विलग्नपरिपौ नीचेऽथवा दुर्बले
जातो याति विदेशमिष्टदनुजाचार्येण दृष्टे यदि ।
तत्रैव स्थितिरन्त्यपे रविकरच्छन्ने विलग्नाधिपा-
दल्पग्नामचरो बलिन्यापि धनप्रामाधिवासो भवेत् ॥ २३॥

होरेशाद्वययपे विलग्नभवनात् केन्द्रत्रिकोणस्थिते
मित्रस्योषगृहोपगे शुभयुते पार्श्वद्वये मानवः ।
चेतोरम्यमहीचरो दिवचराचार्येन्दुशुक्रेक्षिते
दिव्यक्षेत्रमुपैति जन्मधरणीवासस्तदर्थे रिपौ ॥ २४॥

विदेशभाग्यं चरभे विलग्ने चरे तदीशे चरखेटदृष्टे ।
स्थिते स्वदेशे बहुभाग्ययुक्तः स्थिरहैर्भूरिधनान्वितः स्यात् ॥ २५॥

होराधीशे पापस्वेटे रिपुस्थे पापक्षेत्रे भानुपुत्रेण युक्ते ।
शूद्रप्रायो राहुणा केतुना वा जातश्चाण्डालोऽथवा नीचतुल्यः ॥ २६॥

लग्नाधिपे शोभनराशियुक्ते बलोपयते तनुपुष्टिमेति ।
लग्नस्थखेटे रिपुणिचभागे दुःस्थानपे देहसुखं न याति ॥ २७॥

विलग्नदर्शी तनुपो विलग्नगस्त्रयोऽपि षष्ठाष्टमरिष्फराशिपाः ।
सपत्ननीचोपगताश्च दुर्बला यदि स्वपाके न फलं प्रकुर्युः ॥ २८॥

लग्ने जलर्क्षे शुभखेचरेन्दैर्युक्ते तनोः स्थौल्यमुदाहरन्ति ।
लग्नाधिपे तोयरव(स्व)गे बलाढ्ये सौम्यान्विते तत्तनुपुष्टिमाहुः ॥ २९॥

लग्नाधिपे नाशगते तु शुष्कराशौ तनोः कष्टमतीव कृच्छ्रम् ।
लग्नांशपस्थांशपराशिनाथः शुष्कग्रहः स्यात्तनुशुष्कमाहुः ॥ ३०॥

मध्यस्थे रिपुस्वेटयोस्तनुपतौ जातोऽरिभीतो भवेत्
केतौ लग्नगतेऽथवा फणिपतौ दुःस्थे विलग्नाधिपे ।

तत्पाके तदरीशभुक्तिसमये वैकल्यमङ्गे वदेत्
लग्ने शत्रुपतौ फाणिध्वजयुते देहव्रणं देहिनाम् ॥ ३१॥

बलाइर्विहीने यदि लग्ननाथे केन्द्रत्रिकोणे सति लग्नभाक् स्यात् ।
लग्नेश्वराधिष्ठितराशिनाये दुःस्थानगे दुर्बलदेहवान् स्यात् ॥ ३२॥

सक्रूरो देहपोइ देहसौख्यहाऽन्त्यआरिरन्ध्रगः ।
सारीशे देहपे दुःस्थे लग्नस्थे वाऽथ रोगवान् ॥ ३३॥

लग्ने सपापे लग्नेशे बलहीनोऽपि रोगवान् ।
लग्नेशे दुर्बले कोपी निर्व्याधिः केन्द्रकोणगे ॥ ३४॥

देहेशस्थितराशीशे नाशगे दुर्बलो भवेत् ।
भावेशाक्रान्तराशईशैदुःस्थैर्भावाश्च दुर्बलाः ॥ ३५॥

सर्पारयोर्बृहद्वीजो योगो वा सर्पमन्दयोः ।
लग्ने कुजे नाभिगुल्फव्रणस्थौल्यं समादिशेत् ॥ ३६॥

लग्नेशे यदि रिष्फगे दिनकरस्थारातिनाथान्विते
जायावान् बहुरोगवान् कृशतनुः संरक्तगौरद्युतिः ।
लग्नर्क्षादरिनाथपेन च युते जातोऽसिताङ्गो यदा
साहौ लग्नपतौ तु वञ्चनविषाद्भीतिं समेति ध्रवम् ॥ ३७॥

लग्ने शुभे शोभनदृष्तेयुक्ते बाल्यात् सुखं तन्नहि पापयोगात् ।
दुःखी भवेत्पापबहुत्वयोगे लग्ने तु बाल्यान्मरणान्तमाहुः ॥ ३८॥

देवलोकांशके शुक्रे लग्नेशे गोपुरांशके ।
लग्ने शुभग्रहैर्दृष्टे मध्येऽन्ते सौख्यभाप्नुयात् ॥ ३९॥

लग्ने शुभे धने पापे केन्द्रे पापसमन्विते ।
लग्नेश्वरोत्तमांशस्थे चादौ दुःखमतः सुखम् ॥ ४०॥

लग्नेशे शुभराशिस्थे शुभग्रहनिरीक्षिते ।
गोपुरांशगते वापि षोडशाब्दात्परं सुखम् ॥ ४१॥

लग्नेशस्थानाथे तु केन्द्रकोणोच्चसंयुते ।
लाभे वा बलसंयुक्ते त्रिंशद्वर्षात्परं सुखम् ॥ ४२॥

लग्ने रव्यादिसंदृष्टे पादशः फलमुच्यते ।
राजसेवी पितृधनो जलपण्यो महाधनः ॥ ४३॥

धार्मिकः स्थूलशिश्नः स्याद्विद्याशिल्पयशोऽन्वितः ।
राजपूज्यो व्रतयुतो वेश्यासक्तो धनी सुखी ॥ ४४॥

मन्ददृष्टे विलग्ने तु वृद्धस्त्रीको मली खलः ।
केनाप्यदृष्टम् लग्नं चेद्राशिग्रहवशाद्वदेत् ॥ ४५॥

लग्ने स्वामीक्षिते राजा तात्प्रियो वा धनी सुखी ।
सौम्येक्षितेऽखिलं सौम्यं पापदृष्टे त्वशोभनम् ॥ ४६॥

सुखी लग्ने द्व्यादिदृष्टे सर्वदृष्टे नृपो भवेत् ।
लग्ने त्रयः शुभा राजा दुःखी पापग्रहत्रयम् ॥ ४७॥

लग्नाधिपोऽतिबलवानशुभैरदृष्टः केन्द्रस्थितः शुभकगौरवलोक्यमानः ।
मृत्युं विधूय विदधाति सुदीर्घमायुः सार्द्ध गुणैर्बहुभिरुजितया च लक्ष्म्या ॥ ४८॥

अथ द्वितीयभावफलम् ।

तत्रादौ धनाविचारः ।

वित्तं नेत्रं मुखं विद्या वाक्कुदुम्बाशनानि च ।
द्वितीयस्थानजन्यानि क्रमाज्ज्योतिविदो विदुः ॥ ४९॥

वित्तायेदयराशयः पातियुता वित्ताधिको जायते
लाभस्थौ धनलाभपौ निजसुहृत्तुङ्गादिगौ चेत्तथा ।
तद्वन्ताभधनाधिपौ तनुगतावन्योन्यमिष्टग्रहौ
लग्नेशे धनलाभराशिपयुते लग्ने बहुद्रव्यवान् ॥ ५०॥

धनोपयातः प्रथमोऽथ दर्शी ग्रहो द्वितीयो धनपत्तृतीयः ।
तत्पाकभुक्तौ धनलाभमेति क्रमेण तत्कारकवर्गमूलात् ॥ ५१॥

धनस्थे यदि लग्नेशे निधिमान् बलसंयुते ।
दुर्बले पापसंयुक्ते वङ्चनादिफलं वदेत् ॥ ५२॥

धनस्थितः पापदृशा समेतः सपत्ननीचार्ककराभितप्तः ।
तत्पाकभुक्तौ धननाशमाहुः स गोचरे दुष्टबलान्विते वा ॥ ५३॥

कुतुम्बभावे बहुखेटयुक्ते धनप्रदव्योमचरे बलाढये ।
स्वतुङ्गमित्रस्वगृहोपगे वा धनं समेत्यामरणन्तमाहुः ॥ ५४॥

वित्ताधीशे सोदरेशेन युक्ते लग्नस्थे च भ्रातृवित्तं समेति ।
मातृस्थानस्वामिना मातृवित्तं यद्भावेशेनान्वितस्तद्धनं स्यात् ॥ ५५॥

वित्ताधीशे लग्नगे लग्ननाथे वित्तस्थानेऽयत्नतो वित्तमेव ।
यद्भावस्थौ लग्नवित्तेश्वरौ चेत्तन्मूला तु द्रव्यवृत्तिर्नरणाम् ॥ ५६॥

चन्द्रः कुटुम्बभवने शुक्रेण निरीक्षितः प्रदाता च ।
सौम्ये शुभसंदृष्टे स एव धनवान् सदा ज्ञेयः ॥ ५७॥

अर्थाधीशो यत्र संस्थो नराणां तस्मिन् काले तत्र वृद्धिर्विशेषात् ।
तद्भागे च द्रव्यलाभं करोति वक्रोऽसौ चेद्दृभु सर्धार्थसिद्धिः ॥ ५८॥

धनेशे लाभसंयुक्ते लाभेशे धनलाभगे ।
तावुभौ केन्द्रगौ वापि धनवान् ख्यातिभान् भवेत् ॥ ५९॥

धनेशे व्ययषष्ठस्थे व्ययेशे वित्तगेऽथवा ।
लाभेशे रिपुरन्ध्रस्थे व्यये वा धननाशनम् ॥ ६०॥

व्ययभावगते जीवे वित्तेशे बलवर्जिते ।
शुभैरनीक्षिते लग्ने वित्तनाशं वदेद् बुधः ॥ ६१॥

लग्नेशे धनराशिस्थे धनेशे लाभराशिगे ।
लाभेशे वा विलग्नस्थे निध्यादिधनमाप्नुयात् ॥ ६२॥

लग्नायधनभाग्येशाः परमोच्चांशसंयुताः ।
वैशेषिकांशगा वापि तदा कोटीश्वरो भवेत् ॥ ६३॥

दिनेश्वरकरच्छन्ने धनेशे नीचराशिगे ।
पापषष्ठ्यंशसंयुक्ते शुणग्नस्ते भवेन्नरः ॥ ६४॥

अथ नेत्रविचारः ।

शुक्रेन्दुनयनाधिशैरिकस्थैस्तु निशान्धकः ।
सूर्युअशुक्रविलग्नेशैरदृश्यैर्मध्यलोचनः ॥ ६५॥

विलग्नवित्तास्ततपः सुतेशा रिपुव्ययच्छिद्रगृहोपयाताः ।
विलग्नसम्बन्धकरः सितश्चेद्विलोचनाभावमुपैति जातः ॥ ६६॥

सितः सुतारीशयुतो विलग्ने निरेशकोपान्नयनप्रमादः ।
धनेशभौमौ यदि लग्नयातौ कर्णस्य रोगं कथयन्ति तज्ज्ञाः ॥ ६७॥

शन्यारयोगे गुलिकेन युक्ते नेत्रेश्वरे तत्र तु नेत्ररोगः ।
नेत्र् यदा पापबहुत्वयोगे यमेन दृष्टे सति रुग्णनेत्रः ॥ ६८॥

नेत्रेश्वरे शुभयुते शुभदृष्टियुतेऽथवा ।
शुभांशकस्थिते वाऽपि शुभदृक स नरो भवेत् ॥ ६९॥

अथ मुखविचारः

जातोऽसौ सुमुखः शुभे धनगते तुङ्गदिवर्गन्विते
तद्भावे यदि सौम्यवर्गसहिते वाल्सिद्धिमेति ध्रुवम् ।
आज्यस्पर्शमुपैति वित्तगृहगे भौमे च पापेक्षिते
जातः किद्रवमुख्यभुग् धनगते रहौ च पापेक्षिते ॥ ७०॥

लग्नास्तार्थाष्टमस्थेऽर्के भौमे वाऽन्यतरेक्षिते ।
आव्यस्पर्शोऽग्निभीतिर्षा सम्भवन्ति मसूरिकाः ॥ ७१॥

पापैर्युते मुखस्थाने दुर्मुखः पापवीक्षिते ।
कोधाननो नरः पापी तदीशे गुलिकान्विते ॥ ७२॥

प्रफुल्लवदनः श्रीमान् केन्द्रे मुखपतौ यदा ।
स्वोच्चस्वमित्रवर्गस्थे सुमुखः शुभवीक्षिते ॥ ७३॥

वाग्भावेशे राहुयुक्ते च दुःस्थे राहुक्रान्तस्थाननाथान्विते च ।
पाके भुक्तौ तस्य दन्ताभयः स्याद् जिह्वारोगं तारकामूनुभुक्तौ ॥ ७४॥

राहुद्वितीयगृहपौ सहजेशयुक्तौ जातः समेति गलरोगमतीव कष्टं ।
दारिद्रयदौ शशिरवी धनराशियातौ भौमार्कजौ सकलरोगकरौ भवेताम् ॥ ७५॥

अथ विद्या-वग्विचारः ।

वाग्भावेशे गुरुयुते नाशस्ये मूकता भवेत् ।

देषकृन्नतु सर्वत्र स्वोच्चस्वर्क्षगतो ग्रहः ॥ ७६॥

वागीशबुधजीवेषु निर्विद्यो नाशगेषु च ।
केन्द्रेषु ते त्रिकोणे वा स्वर्क्षे वा विद्ययाऽन्वितः ॥ ७७॥

द्वितीये दुर्बले सौम्ये द्वन्द्वयुद्धहतो भवेत् ।
जीवार्थेशौ दुर्बलौ वा पवनव्याधिभान्नरः ॥ ७८॥

वाक्स्थानपे देवपुरोहितेन युक्ते यदा नाशगते तु मूकः ।
वाक्स्थानपे सौम्ययुते त्रिकोणे केन्द्रस्थिते वा शुभदे च वाग्मी ॥ ७९॥

वागीशस्थांशपे औम्ये स्वोच्चे वा शुभवीक्षिते ।
पारावतांशके वाऽपि वाग्मी पटुतरो भवेत् ॥ ८०॥

केन्द्रत्रिकोणगे जीवे शुक्रे स्वोच्चं गते यदि ।
वाग्भावपेन्दुपुत्रे वा गणितज्ञो भवेन्नरः ॥ ८१॥

गणितज्ञो भवेज्जातो वाग्भावे भूमिनन्दने ।
ससौम्ये बुधसन्दृष्टे केन्द्रे वा सोमनन्दने ॥ ८२॥

वाग्भवपे रवौ भौमे गुरुशुक्रानिरीक्षिते ।
पारावतांशके वापि तर्कयुक्तिपरायणः ॥ ८३॥

सम्पूर्णबलसंयुक्ते गुरौ तद्भवनेश्वरे ।
दिनेशभृगुसन्दृष्टे शाब्दिकोऽयं भवेश्वरः ॥ ८४॥

वेदान्तपरीशीली स्यात्केन्द्रकोणे गुरौ यदि ।
बुधेन भृगुणा दृष्टे शनौ पारावतांशके ॥ ८५॥

षट्शास्त्रवल्लभः केद्न्रे जीवे दानवपूजिते ।
सिंहासने गोपुराम्शे वाग्भावस्यांशपे बुधे ॥ ८६॥

अथ कुटुम्बविचारः ।

उपजीव्य नरं सर्वे तदीशे गोपुरांशके ।
वर्द्धन्ते मुदितास्तस्य भृगौ पातावतांशके ॥ ८७॥

जायाकुटिम्बगृहपौ सितपापयुक्तौ दुःस्थौ च तत्समकलत्रहरौ भवेतम् ।

वित्ताधिपे बलवति स्मरराशिपे वा तुङ्गादिगे यदि समेति कलत्रमेकम् ॥ ८८॥

अथ पात्राशनयोविंचारः ।

भिक्तिस्थानपतौ सितेन्दुसहिते लग्नादिकेन्द्रस्थिते
रौप्यं पात्रमुपैति कालश्चनमयं जीवेन्दुशुक्रान्विते ।
भुक्तिस्थानपदेहपौ शनियुतौ लोहादिपात्रं वदेद्
भौमे पापनिरीक्षिते धनगते जातः कदग्नादिभुक् ॥ ८९॥

वह्नाशनो भुक्तिपतौ सपापे दावाग्निदण्डायुधकालभागे ।
नीचांशके पापनिरीक्षिते च शुभैर्न दोषः सहितेक्षिते वा ॥ ९०॥

भुक्तिस्थाने शुभयुते तदीशे शुभसंयुक्ते ।
शुभग्रहेण सन्दृष्टे सुखभुक् स नरो भवेत् ।
पराग्नभुक् तदीशेऽपि नीचशत्रुसमन्विते ।
नीचखेचरसन्दृष्टे तद्दूषणपरायणः ॥ ९२॥

कालोचिताशनो भुक्तिनाथे लग्नेशवीक्षिते ।
पापग्रहेण सन्दृष्टे नीचांशादियुते न तु ॥ ९३॥

स्वल्पाशी रुचिकामः स्याद् भुक्तिनाथे शुभे गृहे ।
स्वोच्चे शुभेन सन्दृष्टे मृद्वंशादिसमविते ॥ ९४॥

भुक्तिस्थानाधिपे मन्दे तदीशे वाऽर्किसंयुते ।
नीचेऽर्कसूनुना दृष्टे श्राद्धभुक् सततं नरः ॥ ९५॥

इति जातकपारिजाते एकादशे तनु-धनभावफलाध्याये विभला हिन्दी टिका समाप्ता ॥ ११॥

अथ तृतीयचतुर्थभावफलाध्यायः ॥ १२॥

तत्र तृतियभावफलम् ।

ज्योष्ठानुजस्थितिपराक्रमसाहसानि कण्ठ्खरज़्रुतिवराभरणांज़ुकानि ।
धैर्य च वीर्यबलमूलफलाज़नानि वक्ष्ये तृतीयभवनात् क्रमज़ोऽखिलानि ॥ १॥

अथ भ्रातृविचार ।

भ्रातृस्थानं तृतीयं च नवैकदशसप्तमम् ।
तत्तदीशादशायां च भ्रतृलाभो भवेन्नृणाम् ॥ २॥

भ्रातृस्थानेशतद्राशितद्भावस्थद्युचारिणाम् ।
मध्ये बलसमेतस्य दशा सोदरकृद्धिदा ॥ ३॥

भौमो बलविहीनश्चेदीर्घायुर्भ्रातृगो भवेत् ।
विलग्नगो बली यस्य कारकः स प्रभुः त्मृतः ॥ ४॥

जन्मकाले गुणी प्राणी कारको यः समृदकृत् ।
क्षयकारी विपर्याते भावपो विपकोऽहिकः ॥ ५॥

सोदरेशेकुजौ नाशं गतौ चेत्मोदरक्षयः
पापर्क्षगौ सपापौ वा भ्रातृनुत्पाद्य नाशदौ ॥ ६॥

नीचास्तगौ सोदरनायकाख्यौ(सोदरनायकारव्यौ)नीचंशगौ पापसमगतौ वा ।
क्रूरादिषष्टयंशगतौ तदानीं भ्रातृन्समुत्पाद्य विनाशहेतुः ॥ ७॥

अतिक्रूरसमायुक्ते भावे वा कारकेऽपि वा ।
तद्भावनायके वाऽपि बल्ये सोदरनाशनम् ॥ ८॥

धनेश्वरे नग्शगते बलाढ्ये पापान्विते सोदरकारकाख्ये ।
तन्मातृकारमहसंयुते च सापत्नमातुः सहजा वदन्ति ॥ ९॥

भ्रातृस्थाने यदि शुभयुते सोदराणं चिरायुः
पापाक्रन्ते सहजभवने पापदृष्टे विनाशम् ।
ज्येष्टं हन्ति द्युमणिरनुजस्थानगः पापदृष्टः
सौरस्तस्यानुजमवनिजो हन्ति सर्वन् कनिष्टान् ॥ १०॥

त्रिकोणकेन्द्रे यदि पापखेटे तृतीयभावादनुजस्य नाशम् ।
शुभोपयाते सहजाभिवृधिः शुभाशुभं मिश्रफलं वदन्ति ॥ ११॥

दुःस्थे चन्द्रे सोदरस्वायुक्ते जातस्यान्यस्तन्यपानं वदन्ति ।
मातृभ्रातृस्थानपौ बन्धुयातौ नास्ति भ्रातृस्थानवृद्धिर्नराणां ॥ १२॥

भौमान्वितौ सोदरदौ भवेतामन्यैः समेतौ यदि नानुजः स्यात् ।
सौरस्तृतीयेऽनुजनाशकर्ता विधुन्तुदः सोदरवृद्धिकृत्स्यात् ॥ १३॥

अदृश्यराशौ यदि वा सपापे वधूगृहस्थे सहजाधिनाथे ।
जातानुजस्योपरि नानुजः स्यात् पुंवर्गगे दृश्यगते तथैव ॥ १४॥

भ्रातृस्थानपतौ तु पुंभवनगे तस्यानुजो जायते
युग्मर्क्षे यदि भार्गवेण शशिना युक्तेऽथवा वीक्षिते ।
सौम्यर्क्षे शुभखेचरेक्षितयुते केन्द्रत्रिकोणस्थिते
पश्चाज्जातसहोदरिश्वरसुखी दीर्घायुरारोग्यभाक् ॥ १५॥

सहोदरस्थानपतौ तनुस्थे सलग्नपे सोदरनायके वा ।
गर्भोऽभयोऽनन्तरमस्य मातुस्तृतीयराशौ सपतौ तथैव ॥ १६॥

अथ सोदरसङ्ख्याशानम् ।

लाभावसानभवनोपगतग्रहेन्द्रसङ्ख्यास्तदग्रजजनाः सहजा भवन्ति ।
लग्नात्तृतीयधनयातवियच्चरेन्द्रैः संख्याजनाः स्युरनुजाः कथयन्ति तज्ज्ञाः ॥ १७॥

भ्राटृस्थानपकारकेक्षितयुता वीर्याधिका यद्यदा
तद्युक्तप्रहसंख्ययाऽनुजजनिं जातः समेति ध्रवम् ॥

चत्वारो यदि नीचमुढरिपुगा निघ्नन्ति जातानुजां
स्ते कुर्वन्ति चिरायुरिष्टबलिनः सर्वानुजानां ग्रहाः ॥ १८॥

भ्रात्रस्थानपमुख्यखेचरगणे द्वौ वीर्यवन्तौ यदा
नाशानाशफलप्रदौ समतया वीर्याधिकाश्चेत्त्रयः ।
खेटः स्त्रल्पसहोदरक्षयकरा दुःस्थानगाः स्त्रीग्रहाः
यद्यल्पानुजवृद्धिदास्तदनुजस्वाम्यंशसंख्यानुजाः ॥ १९॥

भूमिजे सहजस्थाने यवतां वियते बलम् ।
शत्रुनीचग्रहं स्यक्त्वा तावन्तः सहजाः स्मृताः ॥ २०॥

भ्रात्रीदौ खीग्रहर्क्षस्थौ भ्रातृदौ पुंग्रहर्क्षगौ ।
सोदरेशकुजौ स्यातां भ्रातृभ्रात्रिसुखप्रदौ ॥ २१॥

स्वीहोरया वा युवतिग्रहेण युक्ते यदि भ्रातृहे विलग्नात् ।
सहोदरीलाभमुपैति जातः सहोदरं तत्परतोऽन्यथा चेत् ॥ २२॥

कारकः सहजाधिशस्तद्दर्शे(तद्दर्शे)तत्र संस्थितः ।

इष्टानिष्टकरास्तेषां स्वदशान्तर्दशासु च ॥ २३॥

कारकादिचतुःखेटफुटयोगांशकानुजाः ।
वर्ज्या नीचारिमूढांशाः स्वोच्चांशा द्वीगुणिकृताः ॥ २४॥

तृतीयात्ससमर्क्षेण भ्रातृभार्याफलं वदेत् ।
लग्नेशकुजसोत्थेशा भ्रात्रनिष्टशुभप्रदाः ॥ २५॥

अन्योन्यामिष्टविपुलं तु सहोदराणां लग्नाधिपेन साहिते यदि सोदरेशे ।
अन्योन्यामिष्टस्वचरां यदि तौ बलाढ्यौ लग्नेऽथवा सहजभे न विभागमाहुः ॥ २६॥

अथभ्रात्ररिष्टम् ।
लग्नेशानुजनायकौ विबलिनावन्योन्यशत्रुग्रहौ
दुश्चिक्यस्थितकारकौ च यदि वा दुःस्थानगौ दुर्बलौ ।
तत्पाके सहजप्रमादकलहं तन्नाशभर्थक्षयं
तत् खेटोपगकोपहेतुकलहस्नेहादि सर्वं वदेत् ॥ २७॥

गुरुदृष्टेऽनुजे शुक्रे भ्रातृरक्षणतत्परः ।
रविदृष्टे बुधे सोत्थे सुहृन्नाशकरो भवेत् ॥ २८॥

भ्रातृस्थातन्नायककारकाणां नीचरिदुःस्थानसमन्वितानाम् ।
भुक्तौ दशायां भनसत्त्वनाशं पराजयं भ्रातृविनाशमाहः ॥ २९॥

लग्नेशस्फुटतो विशोध्य सहजस्थानाधिपस्य स्फुटम्
तन्वक्षत्रगते शनौ तु मरणं तस्मोदराणां वदेत् ।
तस्माद्धि स्फुटतस्तु मानगृहपे भौमे च संशोधिते
राशौ भानुसुते तथैव च चतुर्थोगस्फुतांशेऽथवा ॥ ३०॥

चतुःस्फुटाक्रान्तदृकाणराशिं गते गुरौ सोदरनाशमाहुः ।
तत्तारकानाथदशाऽनुजानामतीव सम्पत्सुखदायिनी स्यान् ॥ ३१॥

भूसूनुस्फुटतो विशोध्य फणिनं शेषत्रिकोणे गुरौ
जातस्यानुजनाशनं क्षितिसुतं राहुस्फुटाच्छोधयेत् ।
तद्राशिस्थनवांशकेऽमरगुरौ तज्ज्येष्ठनाशं वदेद्
जन्माधानपकर्मपस्फुटगृहे जीवेऽनुजो जायते ॥ ३२॥

पराक्रमविचारः

विक्रमाधिपतौ स्वोच्चे नाशस्थे पापसंयुते ।
चरराशौ चरांशस्थे युद्धात्पूर्व दृढो भवेत् ॥ ३३॥

कारके बलहीने वा क्रूरषष्ट्यंशसंयुते ।
शुभदृग्योगसम्बन्धे विजयी विक्रमेश्वरे ॥ ३४॥

सौम्यार्धिपे भानुयुतेऽत्र वीरश्चन्द्रान्विते भानस्तधैर्यजातः ।
दुष्टो जहो भौमयुते प्रकोपी सौम्यन्विते सात्त्विकषुद्धियुक्तः ॥ ३५॥

जीवान्वते धीरगुणाभिरामः समस्तशास्त्रार्थविशारदः स्यात् ।
कामातुरः शुक्रसमन्विते तु तन्मूलकोपत् कलहप्रवीणः ॥ ३६॥

जडो भवेद्वासरनाथस्तूनुयुक्तेऽतिभीतो फाणिसंयुते स्यात् ।
बाहिर्गदो हृद्रदजाड्ययुक्तः केत्वन्विते मान्दियुते तथैव ॥ ३७॥

लग्ने गुरौ विक्रमनाथयुक्ते चतुष्पदानां प्रवदन्ति भीतिम् ।
गवां भयं जलराशिलग्ने जलप्रमादं समुपैति जातः ॥ ३८॥

कुजेन युक्ते स्वचरे विलष्ठे सत्त्वं बलं गानौखं समेति ।
कुजानुजस्यानुजराड्नाथास्त्रयो  बलीष्ठा रणरङ्गशूराः ॥ ३९॥

तेषां त्रयाणामपहारकाले पाकेऽथवा मूलफलार्दसौख्यम् ।
श्रोत्रद्वयं भूषणसत्कथादिसम्पत्करं भ्रातृसुतादिलामम् ॥ ४०॥

सात्त्विको भवति सोदराधिपे सौम्यवर्गसहिते बलान्विते ।
नीचमूढरिपुपापराशिगे पापखेचरयुते तु साहसी ॥ ४१॥

अथ कण्ठविचारः
शौर्याधिपे राहुसमेतराशिनाथान्विते राहुयुते विलग्ने ।
सर्पाद्भयं विक्रमराशिनाथे बुधेन युक्ते गलरोगभाक् स्यात् ॥ ४२॥

पापे तृतीये गलरोगमत्र वदन्ति मान्धादियुते विशेषात् ।
भौमान्विते भानुसुते बलाढ्ये तृतीयराशौ यदि कण्तुरोगम् ॥ ४३॥

विक्रमेशगुरू लग्नं गतौ गोभीतिसूचकौ ।
राहुणा वा फणिक्रान्तराशिपेन युतौ यदि ॥ ४४॥

सुबुधो विक्रमपतिर्गलरोगकरो भवेत् ।

सोत्थेऽरिनीचगे पापे सोत्थाभावो विषादिभुक् ॥ ४५

बुधेन जीवेन युतेक्षिते वा तृतीयराशौ बलसंयुते च ।
तत्क्न्द्रगे मन्त्रिणि बोधने वा कण्ठस्वरं चारुतरं समेति ॥ ४६ ॥

अथ श्रुतिभूषाणाविचारः

तृतीये सौम्यसंयुते सौम्यखेचरवीक्षिते ।
तदिशे शुभसंयुक्ते कर्णयोर्भूषणं वदेत् ॥ ४७॥

शुक्रे तृतीये यदि मौक्तिकं तु जीवे तुलस्याभरणं वदन्ति ।
सरक्तमानीलमयं दिनेशे चन्द्रे बहु त्वाभरणं बलाढ्ये ॥ ४८॥

सौम्ये श्यामं कुजक्षेत्रे विचित्राभरणं वदेत् ।
तत्पतौ स्वोच्चवर्गस्थे दिव्यभाभरणं ॥ ४९॥

अथ वस्त्रविचारः

मानस्थे गुरगेऽथवाऽनुजपतौ सौम्यर्क्षगे तद्यते
दिव्यं वस्त्रमपूर्वमेति सहजे सौम्ये सुवस्त्रं लभेत् ।
वीर्याथौ बहुवस्त्रभूषणक्रौ शुक्रानुजस्थानपौ
स्यातां धर्मकथारसश्रवणदौ जीवज्ञायुक्तेक्षितौ ॥ ५०॥

अथ धैर्यविचारः ।

धैर्यान्वितो विक्रमेशे सौम्यग्रहनवांशके ।
शुभेक्षिते शुभयुते वैशेषिकसमन्विते ॥ ५१॥

धैर्याधिपे पातयुतेक्षिते वा दुःस्थानगे धैर्यविनाशमेति ।
केन्द्रत्रिकोणे शुभखेटयुक्ते शुभेक्षिते वा यदि धैर्यशाली ॥ ५२॥

अथ बलविचारः

वीर्याधिपे भूमुसुतेन युक्ते पापर्क्षगे वीर्याविनाशहेतुः ।
केन्द्रत्रिकोणे ससिते बलाढ्ये वीर्याधिको भोगगुणप्रकाशः ॥ ५३॥

अथ अशनंविचारः

शुक्रं निशाकरं स्यात्वा लग्नात्सोदरभे शुभे ।
शुभराश्यांशगे जातः समेति सुखभोजनम् ॥ ५४॥

जीवस्य राशिनवभाग़ाड़्ख़नाषाम्स्थे वीर्याधिपे यदि सुराचिंतवीक्षिते वा ।
तत्केन्द्रकोणगृहगेऽवनिजे बलाढ्ये जातस्तु कन्दफलमूलरसप्रियः स्यात् ॥ ५५॥

सोदरारातिगः शुक्रः शोकरोगभयप्रदः ।
तत्रैव शुभकारी स्यात्पुरतो यदि भारकरात् ॥ ५६॥

गुरुशुक्रयुते भुक्तौ नाथे सौम्ययुतेक्षिते ।
बलवच्छुभदृष्टे वा त्वन्नदाता भवेन्नरः ॥ ५७॥

सौम्ये स्वोच्चं गते भुक्तौ सौम्यग्रहनिरीक्षिते ।
नाथे वैशेषिकांश वा सुखभुक्तिप्रदो भवेत् ॥ ५८॥

इति तृतीयभावफलानि ।

अथ चतुर्थभावफलम् ।

वदन्ति विद्याजननीसुखानि सुगन्धगोबन्धुमनोगुणानि ।
महीपयानक्षितिमन्दिराणि चतुर्थभावप्रभवानि तज्ज्ञाः ॥ ५९॥

अथ विद्याधिचारः ।

विद्याराशौ निजपतियुते सौम्ययुक्तेक्षिते वा
जातो विद्याविनयचतुरश्चन्द्रसूनौ बलिष्ठे ।
दुःस्थे पापद्युचरसहिते पापदृष्टे तदीशे
विद्याहीनो भवति मनुजः पापराशिस्थिते वा ॥ ६०॥

विद्यास्थानपजीवचन्द्रत्नयाः षट्त्रिव्ययायुःस्तिता
विद्याबुद्धिविवेकहीनफलदा नीचारिगा वा यदि ।
स्वोच्चस्वर्क्षगतास्त्रिकोणगृहगाः केन्द्रस्थिता वा यदि
शीविद्याविनयादियुक्तिनिपुणो राजाधिराजप्रियः ॥ ६१॥

अथ मातृविचारः ।

शुक्रे बलिष्ठे यदि वा शशाङ्के सौम्येक्षिते शोभनभागयुक्ते ।
चतुष्टये मातृगृहे बलाढ्ये मातुश्चिरायुष्टमुदाहरन्ति ॥ ६२॥

मातृस्थानाधिपे षष्ठे व्यये वा वलवर्जिते ।
लग्ने पापे पापदृष्टे मातृनाशं वदेद् बुधः ॥ ६३॥

क्षीणे चन्द्रेऽष्टभे षष्ठे व्यये वा पापसंयुते ।
पाताले पापसंयुक्ते मातृहानिर्न संशयः ॥ ६४॥

मातृस्थानगते मन्दे पापग्रहनिरीक्षिते ।
रन्ध्रनाथेऽरिनीचस्थे मातृनाशं विनिर्दिशेत् ॥ ६५॥

भ्रातृपुत्रगते पापे पातालेशेऽरिनीचगे ।
चन्द्रे पापसमायुक्ते मातृरोगं विनिर्दिशेत् ॥ ६६॥

षष्ठेश्वरेण सहितः सुखराशिनाथो धर्मस्थितो जनकमत्र विटं करोति ।
भाग्यधिपेन सहितो यदि मातृनाथः सौख्यस्थितो जन्कमत्र विटं करोति ॥ ६७॥

षण्मातृपौ पितृस्थने पितुश्च व्यभिचारदौ ।
मातृतातारिदेहेशैरेकस्थैः परजातकः ॥ ६८॥

पापेक्षिते पापशुते शशाङ्के दिवाकरे वा यदि केन्द्रराशौ ।
क्रूरे सुखे वा यदि पापदृष्टे जातो नरः स्याद्यदि मातृगमी ॥ ६९॥

चन्द्रे भृगौ वा केन्द्रस्थे पापदृईष्टेऽथवा द्वयोः ।
क्रूरे सुखे मातृगामी यदि वा गुरुदारभाक् ॥ ७०॥

सुखस्थे सारषष्थेशे चन्द्रे माताऽन्यमैथुनी ।
व्यभिचरप्रदो मातुः सरादुदिननायकः ॥ ७१॥

शीतांशौ राहुकेतुभ्यां युक्ते नीचेन सङ्गमः ।
मन्दयुक्ते च शूद्रेण वैश्येन बुधयोगतः ॥ ७२॥

रवियुक्ते क्षेत्रियेन्ण मन्त्रिभ्यां द्विजसङ्गमः ।
एवं चन्द्रः कुजारीशयुक्तस्तत्फलदो भवेत् ॥ ७३॥

चन्द्रोऽनिष्टस्थानगः सानुजेशो जातस्यास्तन्यपानं करोति ।
दुःस्थानस्थौ मातृपितृईक्षनाथौ पित्रोर्मृत्युर्लग्ननाथे बलाढ्ये ॥ ७४॥

पितृकर्माधिपे दुःस्थे लग्नेशे बलसंयुते ।

पित्रोरनिष्टकारी स्यात् सीमन्तरहितोऽथवा ॥ ७५॥

मातृस्थानेशलग्नेशौ तत्र कोणगतौ यदि ।
तदीशो लग्नगो माता पित्रा सह मृता भवेत् ॥ ७६॥

मातृलग्नेशपितृपाः केन्द्रकोणस्थिता यदि ।
तद्दशान्तर्दशकाले जन्न्यास्त्वनुमृत्युदाः ॥ ७७॥

रवीन्दू पितृमातृस्थौ यदि तावनुमृत्युदौ ।
तदीशोक्षितयुक्ता वा रविसम्बन्धिनस्तथा ॥ ७८॥

ये मातृभावमतिकारकतत्समेता-स्तन्मातृराशिगतवीक्षितखेचरेन्द्राः ।
तेषामनिष्टकरखेटदशापहारे-जातस्य मातृमरणं प्रवदन्ति सन्तः ॥ ७९॥

मार्तण्डस्फुटतो विशोध्य शशिणं तच्छेषराश्यंशके
जीवे भानुसुते च मातृमरणं तत्कोनगे वा नृणाम् ।
संशोध्यं यमकरुटकं हिमकराद्रन्ध्राधिपस्य स्फुटं
तद्राशौ रविनन्दने मृतिमुपैत्यम्बा तदंशे रवौ ॥ ८०॥

अथ सुखविचारः ।

गोपुराद्यंशके जीवे सुखस्थानगतेऽपि वा ।
धनायवृद्धिभावेषु खेटेषु च सुखी भवेत् ॥ ८१॥

बुधदृष्टियुते सौख्ये सौम्यमध्यगतेऽथवा ।
जीवराश्यंशके वाऽपि पुण्यकर्मरतः सदा ॥ ८२॥

सुखस्थितः शोभनराशिगो बली विलग्नसम्बन्धगुणाधिको यदि ।
तज्जातिवर्गेण सुखं तदीयधातुश्रियमेति मानवः ॥ ८३॥

चतुर्थगो नीचसपत्नयातस्त्वनिष्टभावाधिपतिर्विलग्नात् ।
लग्नेशशत्रुर्यदि तत्प्रकोपान् शरीरसौख्यादिविनाशमाहुः ॥ ८४॥

चतुर्थभावस्थितदर्शिकारका बलान्विता यद्यतिसौख्यद्रेतुकाः ।
अनिष्टदा नीचसपत्नमुढगाः सुखं शुभेनाशुभमन्यखेचरैः ॥ ८५॥

चतुर्थगे भाग्शपतौ सयुक्रे बलाधिके स्याच्चिरकालभोगी ।
शुभान्विते रन्ध्ररिपुव्ययस्थे जातोऽल्पकालं समुपैति सौख्यम् ॥ ८६॥

अथ सुखादिविचारनिर्णयः ।

सुखाचिन्ता गृहेज्याभ्याण् मातृचिन्ता सुखेन्दुतः ।
सुगन्धं गृहशुक्राभ्यां वस्त्रवहानभूषणम् ॥ ८७॥

अथ सुगन्धविचारः ।

सुखेश्वरे शोभनराशियुक्ते शुक्रेण दृष्टे सति संयुते वा ।
अरातिनीचग्रहदृष्तिहीने सुगन्धमाल्यादिसुखं समेति ॥ ८८॥

अथ वस्त्रविचारः ।

वीर्यान्विते शीतकरे सुवस्त्रं साहिध्वजे जीर्णतरं समेति ।
कौशेयकं जीवयुते च रत्नचित्रं सशुक्रे सशनौ तु कृष्णं ॥ ८९॥

शुक्रेन्दुवर्गसहिते सुखराशिनाथे शुक्रेण शीतरुचिना सहितेक्षिते या ।
नीचारिपापगगनाटनदृष्टिमुक्ते पङ्चादिवित्तमखिलं लभते मनुष्यः ॥ ९०॥

अथ बन्धुविचारः ।

बन्धुस्थानेश्वरे सौम्ये सौम्यग्रहनिरीक्षिते ।
कारके बलसम्पूर्णे बन्धुपूज्यो भवेन्नरः ॥ ९१॥

बन्धूपकर्ता तन्नाथे केन्द्रकोणायसंयुते ।
वैशेषिकांशसंयुक्ते पापदृईग्योगवर्जिते ॥ ९२॥

बन्धुद्वेषी भवेन्नित्यं पापाक्रान्ते रसातले ।
नीचास्तखेटसंयुक्ते शुभदृग्योगवर्जिते ॥ ९३॥

अथ यनोविचारः ।

सपापे रन्ध्रपे सौख्ये कपटी पापसंयुते ।
स्वोच्चमित्रस्वर्गस्थे निष्कानव्यं शुभेक्षिते ॥ ९४॥

विशुद्धहृदयः शान्तो हृदयंशे बलान्विते ।
गोपुराद्यंशके वाऽपि मृद्वंशादिसमन्विते ॥ ९५॥

अथ वाहनविचारः ।

वाहनेशे बलयुते यानराशौ बलान्विते ।
शुभग्रहेण संदृष्ते वाहनादि फलं वदेत् ॥ ९६॥

वाहनेशे वाहनस्थे सेन्दुजे शुभवीक्षिते ।
शुभखेचरराश्यंशे वाहनादि फलं वदेत् ॥ ९७॥

चन्द्रो विलग्नसम्बन्धी वाहनेशसमन्वितः ॥

तुरङ्गवाहनं तस्य वदन्ति मुनिपुङ्गवाः ॥ ९८॥

द्वितीये वा चतुर्थे वा चन्द्रे शोभनराशिगे ।
शुभखेचरसंयुक्ते समुपैत्यश्ववाहनम् ॥ ९९॥

सेन्दौ चतुर्थाधिपतौ विलग्नेलग्नेश्वरेणापि युतेऽश्वलाभम् ।
शुक्रेण युक्ते यदि वाहनेशे देहान्यते वा नरवाहनं स्यात् ॥ १००॥

आन्दोलिकाभरणदौ सितपूर्णचन्द्रौ केन्द्रत्रिकोणगृहगौ बलिनौ भवेतां ।
रक्ताम्बराभरणदः सुरपूजितर्क्षे चन्द्रे सुरेन्द्रसचिवेक्षितसंयुते वा ॥ १०१॥

आन्दोलिकातुरगलाभभुपैति जातः शुक्रेन्दुयानपतयस्तनुनाथयुक्ताः ।
एकत्र देवगुरुयानपचन्द्रशुक्राः केन्द्रत्रिकोणगृहगाश्वतुरङ्गयानं ॥ १०२॥

वाहनेशे गुरुयुते चतुरङ्गाख्यवाहनम् ।
यानेशे सशुभे माने चामरच्छत्रसंयुतः ॥ १०३॥

सुखेश्वरे केन्द्रगते तदीशे लग्नस्थिते वाहनयोगवन्तः ।
कर्मेश्वरे लाभगते तदीशे कर्मस्थिते भूषणयानवन्तः ॥ १०४॥

अथ राज्यविचारः ।

यानेशे लाभराशिस्थे सुखे वा लाभगे कुजे ।
अथवा भौमराशिस्थे राज्यप्राप्तिर्न संशयः ॥ १०५॥

लग्नाद्वाहनराशिगस्तदधिपस्तद्वीक्षकश्च त्रयः
स्वोच्चस्वर्क्षसुहृद्गृहेषु बलिनः केन्द्रत्रिकोणायगाः ।
दीर्घायुः शायनासनाम्वरबबन्धुक्षेत्राणी सन्मन्दिरं

बन्धुस्नेहमनोज्ञवाहनयशह्सौख्यानि कुर्वन्ति ते ॥ १०६॥

स्वोच्चराशिगतश्चान्द्रिः केन्द्रकोणसमन्वितः ।
विद्यावाहनसम्पतिं करोति विपुलं धनम् ॥ १०७॥

लग्नेशात्सुखनाथतद्भवनगौ भाग्येशभाग्यस्थितौ
चत्वार्ः शुभवर्गगाः सुबलिनस्ते लग्नसम्बन्धिनः ।
अन्योन्याश्रितवीक्षिता यदि महीपालिश्चरायुः सुखी
तेजस्वी चतुरङ्गयानविपुलश्रीराजचिहाङ्कितः ॥ १०८॥

ग्रहत्रयं स्थानबलाधिकं चेद्विचित्रत्नाभरणादि यानम् ।
खेटद्वये वीर्ययुते विलग्ने रदीयपाके समुपैति सौख्यम् ॥ १०९॥

उक्तस्थानत्र्येष्वेको बली वाहनराशिपः ।
लग्नलग्नेशसम्बन्धी तद्दशा वाहनप्रदा ॥ ११०॥

चतुर्थधर्मायधनाधिनाथा विलग्नसम्बन्धिबलाधिकाश्चेत् ।
तदीयपाके समुपैति राश्ज्यं क्रमेण भाग्यं धनलाभमर्थम् ॥ १११॥

ते चत्वारोऽधिकबलयुता देहसम्बन्धिनश्चे-
देतत्सर्वं भवति विपुलं दुर्बला दुःखदाः स्युः ।
मिश्रं मिश्रैस्तनुपरिभवः कारको भावनाथो
भावाक्रान्तो विगतबलिनश्चेदतिक्लेशदास्ते ॥। ११२॥

वाहनेशेऽरिनीचस्थे दुःस्थे धर्माधिपेक्षिते ।
सुदुर्वाहनसम्प्राप्तिश्चलवाहनताऽपि वा ॥ ११३॥

धर्मकर्मविलग्नस्थास्तुङ्गोपगशुभग्रहाः ।
लग्नाधिपेन संदृष्ता यानान्ते दुःखमाप्नुयात् ॥ ११४॥

जीवे वा सुखपे शुभग्रहयुते लग्नात्तपःस्थानगे
सौम्यर्क्षे नरवहानं चिरतरं राजप्रतापान्वितम् ।
दुःस्ते पापयुतेऽस्तनीचरिपुगे यानादिभाग्यं नहि
स्वर्क्षे सर्वबलाधिके चिरसुखं चान्दोलिकारोहणम् ॥ ११५॥

बन्धुकर्मगृहाधीशौ लाभस्थानगतेक्षकौ ।
बलवन्तौ यदि स्यातां सर्वभाग्यफलग्नदौ ॥ ११६॥

लाभस्थौ सुखभाग्येशौ पश्यन्तौ वा सुखस्थलम् ।
वाहिनीसर्वभाग्याढ्यो राजप्रीतिकरो भवेत् ॥ ११७॥

धर्मवाहनराशीशौ लग्नसम्बान्धुनौ यदि ।
जीवदृष्टियुतौ तस्य राजवश्यादिभूषणं ॥ ११८॥

शुभवाहनराशीशौ शुभखेचरसंयुतौ ।
बहुसेनाधिपः श्रीमान् बलिनौ यदि जायते ॥ ११९॥

भाग्यस्थिते वाहनराशिनाथे सशुक्रजीवे शुभखेटराशौ ।
भाग्याधिपे कोणचतुष्टये बहुत्वदेशाभरणार्थयानम् ॥ १२०॥

कामारियानसहजतपोलग्नव्ययेश्वराः ।
सुखाधिपेन संयुक्तारत्वसंख्याकरदेशभाक् ॥ १२१॥

सुखाधिपो देवगुरुः सितो वा बली विलग्नान्नवमोपयातः ।
त्रिकोणकेन्द्रेपगतः शुभेशः समेति जातो बहुवाहनानि ॥ १२२॥

सशुक्रजीवो गेहेशो भाग्यस्थो भाग्यपे सुखे ।
केन्द्रत्रिकोणयोर्वाऽपि बहुवाहनदेशभाक् ॥ १२३॥

अथ राजयोगाः ।

लग्नकेन्द्रस्थिते सौम्ये धर्मे तुङ्गगृहाश्रिते ।
धनेशे केन्द्रभावस्थे योगः सिंहासनप्रदः ॥ १२४॥

भाग्ये शुभेक्षिते केन्द्रे शुभैः सह धनाधिपे ।
उच्चग्रहे द्वितीयस्थे जन्म सिम्हासनप्रदम् ॥ १२५॥

लग्नवाहनभाग्येशाः कर्मस्थाः कर्मपस्तनौ ।
लग्नं पश्यति वा खेटः सिंहासनफलप्रदः ॥ १२६॥

कर्मलग्नसुखाधीशाः कर्मस्थानगता यदि ।
कर्मपो लग्नसम्बन्धी सिंहासनपतिर्भवेत् ॥ १२७॥

गुरुशुक्रशुभाधीशाः केन्द्रकोणयगा यदि ।
अनेकयानसम्पन्नो मण्डलाधिपतिर्भवेत् ॥ १२८॥

थानेशकर्मोपगतौ बलिष्टौ धर्मेशदृष्टौ यदि तद्युतौ वा ।
परस्परक्षेत्रसमागतौ वा सिंहासनप्राप्तिकरौ भवेताम् ॥ १२९॥

तद्दशान्तर्द्दशाकाले तद्राशिपदशागमे ।
तदीशभुक्तिसम्प्राप्तौ सिंहासनपतिर्भवेत् ॥ १३०॥

अथ भाग्यविचारः ।

शुभोदयेशौ सुखरावातौ सुखाधिपो लग्नगतः शुभर्क्षे ।
अतीव सौख्यं समुपैति नित्यं सपत्नयातू यदि शत्रुभाग्यम् ॥ १३१॥

सपत्नभावाधिपतौ तपःस्थे शुभैरदृष्टे बलसंयुते वा ।
स्वकीयभाग्यादिकमल्पकालं ददाति शत्रौ उखनाथदाये ॥ १३२॥

सुखाधिपे शोभनखेटयुक्ते तदीयपाकान्तमरातिगं तत् ।
पापान्विते तस्य दशावसाने पुनः स्वभाग्यं समुपैति सर्वम् ॥ १३३॥

अथ क्षेत्रविचारः ।

चेत्रस्थाने शुभक्षेत्रे तदीशे शुभसंयुते ।
तत्कारके तथा प्राप्ते बहुक्षेत्रधनान्वितः ॥ १३४॥

क्षेत्रेश्वरे नीचसम्पन्नभागे कालाग्निशूलान्तकषष्टिभागे ।
पापान्विते पापमीक्षिते वा क्षेत्रादिनाशं कथयन्ति तज्ज्ञाः ॥ १३५॥

लग्नाधिपस्य गृहपो शत्रुखेटस्तत्पाकभुक्तिसमये गृहभूमिनाशम् ।
यनेशभुक्तिसमये निजबन्धुहानिः शान्यारमान्दियुतभुक्तिरनर्थहेतुः ॥ १३६॥

वित्तेशः ससुखाधिपो नवमगः सौम्यान्वितः सौम्यभे
निक्षेपं समुपैति लाभवनपौ पापालराशिस्थितौ ।
तन्नाथः शुभराशिगः शुभयुतो निक्षेपसिद्धिर्भवे-
लत्वाभेशः सुखराशिगः शुभयुतो निक्षेपवित्तप्रदः ॥ १३७॥

अथ गृहविचारः ।

अर्थव्ययगृहाधीशा नाशगाः पापसंयुताः ।
यावाद्भिरशुभैर्युक्तास्तावद्गेहालसत्वदाः ॥ १३८॥

पापेऽरौ वा पाप्दृष्टे सुखे गेहसुखार्तिभाक् ।
नीचेऽरातौ वा पापदृष्टे सुखे स्याद्गृहो नरः ॥ १३९॥

नीचेऽस्तगे वा गेहस्थे दुःखाम्भोधौ पतिष्यति ।
सुखे पापे पापभाक् स्यात् सुखे मन्दे सुखक्षयः ॥ १४०॥

गृहेशे व्ययगे लग्नादेन्यगेहेऽन्यदेसगः ।
रन्ध्रे गृहाद्यभावो वा षष्ठे ज्ञात्यदिसंग्रहः ॥ १४१ ॥

अयत्नतो मन्दिरलाभदः स्यत् चतुर्थपस्तत्र बलाधिको वा ।
दुःस्थानगो दुष्टबलान्वितश्चेदालस्यगेहं ग्रहपीडितं वा ॥ १४२॥

घट्त्रिव्ययाष्टमोपेता व्ययवित्तगृहाधिपाः ।
यावत्पापसमोपेतास्तावद्गृहविनाशदाः ॥ १४३॥

लग्नत्रिकोनकेन्द्रस्था यावद्बलसमन्विताः ।
तावत्संख्य्कगेहानां सामीचीन्यं वदेद् बुधः ॥ १४४॥

चतुर्थभावाधिपतौ विलग्नाद्व्ययस्थिते जिर्णगृहं समेति ।
त्रिकोणकेन्द्रेपगते बलाढ्ये विचित्रगेहं रुचिरं तदाहुः ॥ १४५॥

तृतीये सौम्यसम्युक्ते गेहेशे बलसंयुते ।
गोपुराद्यांशगे वाऽपि समेति दृढमन्दिरम् ॥ १४६॥

आज्ञाक्रियाक्षेत्रविनाशमाहुराज्ञेश्वरे गेहगते सपापे ।
क्रूरांशके मृत्युकरादिभाग् रन्ध्रेश्वरेणापि युते तथैव ॥ १४७॥

तृतीये सय्म्यसंयुक्ते ग्षेशे स्वबलान्विते ।
लग्नेशे बलसम्पूर्णे हम्ये प्राकाररसंयुतम् ॥ १४८॥

पारावतांशके गेहनाथे गुविन्दुवीक्षिते ।
गोपुराद्यंशके  वाऽपि दैविकं गृहमादिशेत् ॥ १४९॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजात द्वादशोऽध्यायः ॥ १२॥

अथ पङ्चमषष्ठभावफलाध्यायः ॥ १३॥

अथ पङ्चमभावफलम्

पुत्रादेवमहीपपुत्रपितृधीपुण्यानि सञ्चिन्तये-
द्यात्रामस्तौतखर्कमभवनैर्दूराटनं रिष्फतः ।
लग्नाद्बन्धुदिनेशतः पितृसुखं जीवात्मजस्थानतः
पुत्रप्राप्तिरङ्गवित्तपसितैः स्त्रीसम्पदश्चिन्तयेत् ॥ १॥

अथ देवताविचारः ।

लग्नादात्मनि पुंग्रहेक्षितयुते पुंदेवताराधनं
युग्मे शुक्रेनिशाकरेक्षितयुते स्त्रीदेवतामिच्छति ।
भानौ भास्करमुख्यमिन्दुसितयोगौरी कुमारं कुजे
विष्णुं चन्द्रसुते गुरौ शशिघरं रान्यादियोगे परान् ॥ २॥

लग्नाधिपस्यात्मपतौ सपत्ने तद्देवभक्तिः सुतनाशहेतुः ।
समानता साम्यतरे सुहृत्त्वे तद्देवताऽपारकृपामुपैति ॥ ३॥

अथ राज्यविचारः ।

राजस्थाने गुरुबुधसितैरीक्षिते संयुते वा
तद्राशीशे बलवति नृपप्रीतिसम्पतिमेति ।
पापाक्रान्ते विगतबलिनि स्वामिनि क्रूरभागे
जातो विद्याविनयगुणधीराजसन्मानहीनः ॥ ४॥

अथ जन्मविचारः

लग्न यानपतौ सुखे तनुपतौ दृष्टेऽथवा खेचरैः
संयुक्ते तु चतुष्पदस्य जननं राहुध्वजाभ्यामजः ।
गोजन्मार्यसितेन्दुभिश्च महिषी मन्देन दृष्टे युते
जातः पादपुरःसरं तनुपतिमनि तनौ भोगिराट् ॥ ५॥

वित्तास्तगौ पङ्चमयाननाथौ पापेक्षितौ पापसमन्वितौ वा ।
पुंसस्त्रिभागे पुरुषग्रहेन्द्रे जाताः कपिक्रोडबिडालकाद्याः ॥ ६॥

तस्मिन्दबुधेक्षिते तु जननं पिण्डाकृतिर्वाक्पतिः ।
साहिर्दुर्बलवीक्षितो यदि महीदेवान्वयो नीचकृत् ।
एकस्था गुरुराहुभानुतनयाः शुक्रेन्दुपुत्रेक्षिताः

शूद्रोऽपि द्विजतौल्यमेति निखिलां विद्यामुपैति द्विजः ॥ ७॥

अथ पुत्रविचारः ।

लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेऽथवाऽलोकिते
चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथा।सम्भवः ।
पाथोनोदयगे रवौ रविसुते मीनस्थिते दारहा
पुत्रस्थानगतश्च पुत्रमरणं पुत्रोऽवनेर्यच्छति ॥ ८॥

पुत्रस्यानपतौ तु वा नवमपे लग्नात्कलत्रेऽथवा
युग्मक्षिरे शशिशुक्रवीक्षितयुते पुत्रीजनो जायते ।
पुंवर्गे पुरुषग्रहेक्षितयुते जातस्तु पुत्राधिको
जीवात्पङ्चमराशितश्च तनयप्राप्तिं वदेद् दैरिकः ॥ ९॥

शुक्रेन्दुवर्गे सुतभे विलग्नाच्चुक्रेण चन्द्रेण युतेऽथ दृष्टे ।
पापैरयुक्ते बहुपुत्रशाली शान्यारदृष्टे सति पुत्रहीनः ॥ १०॥

पौत्रप्राप्तिरङ्गभे सुतगृहात्सौम्यस्य राश्यंशके
तन्नाथे शुभखेटवीक्षितयुते केन्द्रत्रिकोणेऽथवा ।
स्वक्षेत्रोपगते तु पुत्रगृहपे जातोऽल्पपुत्रो भवेत्
पुत्रेशांशपतिः स्वभाम्शकगतो यद्येकपुत्रं वदेत् ॥ ११॥

केन्द्रत्रिकोणगृहगः सुतपः शुभर्क्षे सौम्यान्वितो यदि सुतं समुपैति बाल्ये ।
भोगीशयुक्तसुतराशिपभुक्तिजातः स्वल्पायुरति फणिभुक्तिभवश्चिरायुः ॥ १४॥

पुत्रस्थानपवित्तपौ ग्तबलौ पापेक्षिते पुत्रभे
जातोऽनेककलत्रवानपि सुताभावं समेति ध्रुवम् ।
तज्जाया यदि पुत्रयोगजनिता सौम्येन वा पङ्चमात्
षष्ठेशेन निरीक्षिते सुतवती जारेण सञ्ज्ञायते ॥ १५॥

पुत्रस्थाने तदीशे वा गुरौ वा शुभवीक्षिते ।
शुभग्रहेण संयुक्ते पुत्रप्राप्तिर्न संशयः ॥ १६॥

लग्नेशे पुत्रभावस्थे पुत्रेशे बलसंयुते ।
परिपूर्णबले जीवे पुत्रप्राप्तिर्न संशयः ॥ १७॥

पुत्रस्थानगते जीवे परिपूर्णबलान्विते ।
लग्नाधिपेन संदृष्टे पुत्रप्राप्तिर्न संशयः ॥ १८॥

वैशेषिकांशके जीवे पुत्रेशे च तथास्थिते ।
शुभनाथेन संदृष्टे पुत्रे तत्प्राप्तिमादिशेत् ॥ १९॥

दशमे शीतगुर्द्युने भृगुजः पापिनः सुखे ।
तस्य सन्ततिविच्छेदो भवेष्यति न संशयः ॥ २०॥

षष्ठाष्टमस्थो लग्नेशः पापयुक्तः सुताधिपः ।
दृष्टो वा शत्रुनीचस्थैः पुत्रहानि वदेद् बुधः ॥ २१॥

लग्नसप्तमधर्मान्त्यराशिगाः पापखेचराः ।
सपत्नराशिवर्गस्था वंशविच्छेदकारिणः ॥ २२॥

बन्ध्या वृद्धा कृशा बाला रोगिणी पुष्पवर्जिता ।
कर्कशा स्थूलदेहा च नायोर्ऽष्टौ परिवर्जिताः ॥ २३॥

गुरुलग्नेशदारेशपुत्रस्थानाधिपेषु च ।
सर्वेषु बलहीनेषु वक्तव्या त्वनपत्यता ॥ २४॥

पुत्रस्थानं गते पापे तदीशे नीचराशिगे ।
शुभदृष्टिविहीने तु वक्तव्या त्वनपत्यता ॥ २५॥

गुरुलग्नहिमांशूनां पङ्चमस्थैरशोभनैः ।
शुभदृग्योगरहितैर्वक्तव्या त्वानपत्यता ॥ २६॥

पुत्रस्थानगते पापे तदीशे पापमध्यगे ।
सौम्यदृग्योगरहिते वक्तव्या त्वनपत्का ॥ २७॥

पापमध्यगते जीवे पुत्रेशे बलवर्जिते ।
सौम्यदृग्योगरहिते वक्तव्यम् त्वनपत्कता ॥ २८॥

पुत्रस्थाने बुधक्षेत्रे मन्दक्षेत्रेऽथवा यदि ।
मान्दिमन्दयुते दृष्टे तदा दत्तादयः सुताः ॥ २९॥

मीनस्थोऽत्यल्पसन्तानश्चापस्थः कृच्छ्रसन्ततिः ।
असन्ततिः कुलीरस्थो जीवः कुम्भे न सन्तति॥ ३०॥

पुत्रस्थाने कुलिरे वा मीने कुम्भे शरसने ।

स्थितो यदि सुराचार्यस्तत्फलं कुरुते नृणाम् ॥ ३१॥

पापग्रहेन संदृष्टे देवशापत्सुतक्षयः ।
षष्ठाधिपयुते दृष्टे विप्रशापत्मतक्षयः ॥ ३२॥

सुतेशे कुजसंयुक्ते रिपुनाधेन वीक्षिते ।
शुभदृष्टिविहीने च रिपुदोषत्सुतक्षयः ॥ ३३॥

नवमे पापसंयुक्ते मन्दयुक्ते सुतधिपे ।
त्रिकोणे मान्दिसंयुक्ते पितृदोषात्सुतक्षयः ॥ ३४॥

मातृस्थानगते पापे सुतेशे मन्दसंयुते ।
व्ययनाशगते पापे मातृदोशात्सुतक्षयः ॥ ३५॥

राहु केतुयुते दृष्टे पङ्चमे बलवर्जिते ।
तदीशे वा तथा प्राप्ते सर्पदोषात्सुतक्षयः ॥ ३६॥

गुरुपुत्रेशदारेशभूमिजाः संयुता यदि ।
दुर्देवपीडया पुत्रीपुत्रनाशं वदेद् बुधः ॥ ३७॥

पुत्रस्थानगतः कश्चित्परिपूर्णबलान्वितः ।
अदृष्टः पुत्रनाथेन तदा दत्तादयः सुताः ॥ ३८॥

पापक्षेत्रेगते चन्द्रे पुत्रेशे धर्मराशिगे ।
दत्तपुत्रस्य सम्प्राप्तिर्लग्नेशस्तु त्रिकोनगः ॥ ३९॥

युग्मोदये पुत्रनाथश्चतुर्थस्थानगोऽपि वा ।
मन्दाशकसमारूढो दत्तपुत्रो भविष्यति ॥ ४०॥

युग्मांशे भानुजांशे वा पुतेशोऽर्केन्दुजान्वितः ।
दत्तपुत्रस्य सम्प्राप्तिस्तस्मिन्योगे भविष्यति ॥ ४१॥

मन्दांशे पुत्रराशीशः स्वराशौ गुरुभार्गवौ ।
पूर्वं दत्तसुतप्राप्तिः पुनर्नार्याः पुनः सुतः ॥ ४२॥

मन्दांशकस्थिताः खेटाः शुक्लपक्षबलाधिकाः ।
गुरुर्यदि सुखस्थाने दत्तपुत्रेण सन्ततिः ॥ ४३॥

विलग्नस्थे धरासूनौ निधनस्थे दिवाकरे ।
सुखे वा शुभसंदृष्टे पुत्र कालान्तरे भवेत् ॥ ४४॥

लग्ने दिनेशतनये रन्ध्रस्थानगते गुरौ ।
पङ्चमे दुर्बले रिष्फे भौमे कालान्तरे सुतः ॥ ४५॥

पुत्रान् पङ्चमभातृतीयभवनाद् भ्रातृन् कलत्रात् स्त्रियो
दासीश्च क्षितिराशितः स्वभवनाद्दसांश्च मित्राणि च ।
यातांश्चैव नवांशकाञ्च्छुभदृशा हत्वा तथा रोपयेद् ।
व्योमव्योमकरैर्विभज्य तु भृताश्च पुत्रादयः ॥ ४६॥

पुत्रं सोदरभं कलत्रमुदयं यानं च राशि विना
तल्लिप्ताः शुभखेटदृग्बलहताः षष्ट्या विभक्ताः क्रमात् ।
व्योमाकाशकराप्तपुत्रसहजस्त्रीदासदासीउह्त्-
सङ्ख्याः पापनभोगदृग्बलभवाः पुत्रादिनाशप्रदाः ॥ ४७॥

पुत्रस्थानपलग्नपस्फुटयुते राश्यंशकोणे गुरौ
पुत्रातिः सचिवेन्द्रनस्फुटयुते राश्यंशसंख्याः सुताः ।
धीधर्मावनिनायकस्फुटचयप्राप्तांशसंख्याऽथवः
धीर्धमक्षितिगस्फुटैक्यभवने यातांशतुल्याः नुताः ॥ ४८॥

जीवाच्चन्द्रमसो विलग्नभवनात्पुत्रप्रदं पश्चमं
तस्माद्धर्मगृहं च तत्पतिदशाभुक्तौ मुताप्तिं वदेत् ।
पुत्रस्थानपकामपस्फुटयुते यत्तारका तद्दशा
तत्खेटान्वितविक्षकग्रहदशाभुक्तिश्च पुत्रप्रदा ॥ ४९॥

पुत्रस्थानपकारकेक्षकयुता दुःस्थानपा दुर्बला
दुःस्थास्तत्परिपालभूक्तिसमये पुत्रस्य नाशं वदेत् ।
चत्वारो बलशालिनो यदि शुभास्तत्पाकभ्क्त्यन्तरे
पुत्राप्तिं सुतसम्पदः प्रभुजनप्रीतिं च कुर्वन्ति ते ॥ ५०॥

पुत्रेशकारकयुतेक्षकखेचराणां तत्कालजस्फुटयुतांशकराशियातौ ।
वागीशभानुतनयौ यदि गोचरेण जातस्य पुत्रजनिमृत्युकरौ भवेताम् ॥ ५१॥

अथ पितृविचारः ।

पितृस्थानेश्वरे सौम्ये कारके शुभसंयुते ।
भावे वा शुभसंयुक्ते पितृसौख्यं विनिर्दिशेत् ॥ ५२॥

पारावतादौ तन्नाथे कारके च तथा स्थिते ।
स्वोच्चमित्रांशके वाऽपि पितृदीर्घयुरादिशेत् ॥ ५३॥

क्रूरनीचांशकस्थे वा भावनाथे च कारके ।
मन्दमान्द्यगुसंयुक्ते पितृदुःखं विनिर्दिशेत् ॥ ५४॥

सौम्ये तदीश्वरे वाऽपि नीचमूढारिराशिगे ।
क्रूरषष्ट्यंशके वाऽपि पितृदुःखं विनिर्दिशेत् ॥ ५५॥

पित्रिकर्मगृहे जातः पितृतुल्यगुणान्वितः ।
पितृजन्मतृतीयर्क्षे जातः पितृवशानुगः ॥ ५६॥

पितृषष्ठाष्टमे जातः पितृशत्रुर्भविश्यति ।
तद्भावपे विलग्नस्थे पितृश्रेष्ठो भवेत्सुतः ॥ ५७॥

लग्नादायतपःस्थनाः शनिमहीपुत्रागवो मृत्युदा-
स्तातस्यार्कजभूसुतौ निधनदौ बलस्य रन्ध्रास्थगौ ।
माने वा यदि पञ्चमे कुजरविच्छायाकुमारेन्दवः
सद्यो मातुलताताबालजननीनाशं प्रकुर्वन्ति ते ॥ ५८॥

सबले पितृभावेशे लग्नेशेन्दुचतुर्थपाः ।
दुर्बला यदि तन्मार्गर्भतो मरणं विदुः ॥ ५९॥

नवमादष्टमाधीशो नवमात्खरपोऽथवा ।
शनिर्वेधेषु यः क्रूरः संभवेत् पितृमृत्युदः ॥ ६०॥

दिनेशस्थितराश्यंशप्राणितः कोणगे रवौ ।
पितृमृत्युर्मातृमृत्युरिन्दुस्थांशर्क्षयोर्बलात् ॥ ६१॥

भानुस्थितांशपारूढनवांशद्वादशांशभम् ।
गते चन्द्रे भवेन्मृत्युर्मातापित्रोर्यथाक्रमम् ॥ ६२॥

दुष्टस्थानगते भानौ सिंहान्त्यद्वादशांशके ।
जातश्चेज्जननात्पूर्वं पितृमृत्युं प्रयच्छति ॥ ६३॥

मार्तण्डे गुलिकस्फुटादपहृते राशित्रिकोणे शनौ
रागं तज्जनकस्य देवसचिवे मृत्युस्तदंशोपगे ।

आदित्ये यमकण्टकस्फुटयुते तद्राशिकोणे गुरौ
रागं तद्भावनांशकेऽमरगुरौ तातस्य नाशं वदेत् ॥ ६४॥

केन्द्रे चरेऽर्के चन्द्रे वा पितरौ न दहेत्सुतः ।
केन्द्रे द्विदेहगौ तौ चेन्मृत्युदाहौ द्विकालगौ ॥ ६५॥

अदृश्ययातौ पितृमातृनाथौ पित्रोर्मुखादर्शनदौ भवेताम् ।
पुत्राधिपोऽदृशुअगृहोपगस्चेत्पुत्राननादर्शनदोऽन्त्यकाले ॥ ६६॥

अथ बुद्धिविचारः ।

दुःस्थे बुद्धिस्थानपेऽदृश्यगे वा जातो मन्दप्रायबुद्धि समेति ।
केन्द्रे कोणे सौम्यवागिशयुक्ते वीर्योपेते बुद्धिमानिङ्गितज्ञः ॥ ६७॥

त्रिकालज्ञो भवेज्जीवे स्वाम्शे मृद्वंशसंयुते ।
गोपुराद्यंशके वाऽपि शुभंशे शुभवीक्षिते ॥ ६८॥

हृद्रोगी पञ्चमे पापे सपपे च रसातले ।
क्रूरषष्ट्यंशसंयुक्ते शुभदृग्योगवर्जिते ॥ ६९॥

अथ पुण्यविचारः ।

अन्नदानपरो नित्यं पञ्चमेशे शुभांशके ।
शुभखेचरसंयुक्ते भूमिजे केन्द्रमाश्रिते ॥ ७०॥

इति पञ्चमभावफलानि ।

अथ षष्थभावफलम् ।

तत्रादौ रोगविचारः ।

रोगारिव्यसनक्षतानि वसुधापुत्रारितश्चिन्तये-
दुक्तं रोगकरं तदेव रिपुगे जीवे जितारिभवेत् ।
धण्ढोऽरीशबुधौ विधुन्तुदयुतौ लग्नेशसम्बधिनौ
लिङ्गस्यामयकृद् व्रणेन रुधिरः षष्ठे सलग्नाधिपः ॥ ७१॥

पत्नी षण्ढत्त्रमेति क्षतभवन्गते कामपे सासुरेज्ये
भौमे मन्देन दृष्टे रिपिभवनगते शत्रुभार्यमुपैति ।

सौम्यैर्दृष्टे युते वा न भयमरिजनाच्छत्रुभे जन्मलग्नात्
पापैः शत्रुक्षतादिव्रणभयविपुलं जायते लाङ्छनं वा ॥ ७२॥

षष्ठे भास्वति लग्ननायकरिपौ नीचारिगे दुर्बले
जातस्तन्पितृवर्गशसहितो लग्नेशामित्रग्रहे ।
इष्टस्थानगते निजोच्चसुहृदां वर्गोपयाते सति
ज्ञातीनां बहुलं वदन्ति मुनयः शत्रुव्रणाभावभाक् ॥ ७३॥

शत्रस्थानगतोऽरिनीचगृहगो वक्रं गतो वाऽस्तगो।-
अनेकारातिजनो बहुक्षततदुः षष्थाधिपो वा तथा ।
षष्ठस्थानगतेषु भात्करमुखध्योमातनेषु क्रमात्
तत्तकारकखेटवर्गरिपुणा सम्पीढितः सन्ततम् ॥ ७४॥

पापव्योमचरास्त्रयोऽरिपतितत्प्राप्तेक्षका दुर्बला-
गोवित्तक्षयमामयं रिपुभयं कुर्वन्ति जन्मादितः ।
ते सर्वे बलशालिने यदि शुभा गोवित्तमश्वदिकं
राजान्नं सकलोपदंशसहितं रोगारिनाशं वदेत् ॥ ७५॥

तेषामम्बरचारिणामतिशुभौ केन्द्रत्रिकोणायगौ
द्वावेतौ बलशालिनौ यदि लघुव्याध्यादिनाशं नृणाम् ।
एकोऽपि प्रबलो यदि व्रणरिपुक्लेशादि किङ्चित् फलं
यत्तत्कारकवर्गमूलमखिलं भोदं प्रमादं तु वा ॥ ७६॥

पापे लग्नगते सपत्नपयुते देहव्रणं देहिनां
पुत्रस्थे पितृपुत्रयोः सुखगते मातुः कलत्रे स्त्नियाः ।
धर्मस्थे सति मातुलस्य सहजे तस्यानुजस्य व्रणं
लाभस्थे तु तदग्रजस्य निधने जातो गुदार्तो भवेत् ॥ ७७॥

भानुर्मूध्रि शशी मुखेऽवनिसुतः कण्ठे तु नाभेरध-
श्चन्द्रः सूरिरनामयं प्रकुरुते नेत्राभयं भार्गवः ।
मन्दो वातम्हिश्च केतुरुदरव्याधि बुधक्षेत्रगो
लग्नेशः शशिजेन वीक्षितयुतो गुह्यव्रणं यच्छति ॥ ७८॥

लग्नाइयद्राशिगते फणीशे शुक्रेक्षिते तत्तनुचिह्नमेति ।
मन्दाहियुक्ते रिपुराशिनाथे तुरङ्गपश्वादिभयं वदन्ति ॥ ७९॥

पापग्रहेण संदृष्टे बलहीनेऽरिनायके ।
पापान्तरगते वाऽपि शत्रुपीडा भविष्यति ।

शत्रुस्थानाधिपे दुःस्थे नीचमूढारिराशिगे ।
लग्नेशे बलसंयुक्ते शत्रुनाशं व्देद्बुधः ॥ ८०॥

षष्ठेशे गोपुरांशादौ दिवाकरनिरीक्षिते ।
लग्नेशे बलसम्पूर्णे ज्ञातीनामुपकारकृत् ।
इति श्रीनवग्रहपवा वैद्यनाथविरचिते
जातकपारिजाते त्रयोदशोऽध्यायः ॥ १३॥

अथ सप्तमाष्टमनवमभावफलध्यायः ॥ १४॥

तत्र सप्तमभावफलम् ।

यात्रापुत्रकलत्रसौख्यमखिलं सङ्चिन्तयेत्सप्तमा-
दुक्तं पुत्रसुखासुखागमफलं सर्वं च यत्तद्वदेत् ॥ १/२॥

जारः कामगते सिते मदनपे साहिध्वजे वा तवा
कामे जीवय्गीक्षिते शुभगृहे जातो न जारो भवेत् ॥ १॥

दुःस्थे कामपतौ तु पापगृहगे पापेक्षिते तद्युते
तज्जायाभवनस्य मध्यफलं सर्व शुभं चान्यथा ।
कामस्थानपतौ सितेन सहिते पापर्क्षगे कामधीः
सौम्यर्क्षे शुभखेटवीक्षितयुते जातः सितच्छत्रवान् ॥ २॥

वित्तास्तारिपभार्गवास्तनुगताः पापान्विताः कामुकः
पापव्योमचरान्वितौ तनुरिपुस्थानधिपौ चेत्तथा ।
कामस्थे रिपुवित्तलग्नपयुते पापे परस्त्रीरतः
पापारातिकलत्रपा नवमगाः कामातुरो जायते ॥ ३॥

जारः कर्मधनास्तपा दशमगाः पुत्रादिकारग्रहा-
दुःस्था धीगुरुकामपाः सुतगृहे पापेक्षितेऽनात्मजः
जीवज्ञौ यदिवा निशाकरसितौ कामे बहुस्त्रीरतः
शुक्रे मन्मथराशिगे बलवति स्त्रीणां बहुनां पतिः ॥ ४॥

शुक्रारौ मदगौ कलत्ररहितो धर्मात्मजस्थौ तथा
शत्रुस्थानगतौ निशाकरसितौ यद्येकपुत्रो भवेत् ।
लग्नास्तव्ययगेषु पापखेचरेष्विन्दौ सुते दुर्बले

वन्ध्यास्त्रीपतिरेव जातमनुजो जायविहीनोऽथवा ॥ ५॥

बन्ध्यापतिः सितरवी मदनोदयस्थौ चन्द्रेदये समगृहे लल्लनाकृतिः स्यात् ।
पुंराशिगे पुरुषभावयुतं कलत्रं स्त्रीपुंग्रहेक्षितयुते सति मिश्ररूपम् ॥ ६॥

भौमांशे वा भौमराशौ विलग्नात् कामस्थाने जन्मभे वा वधूनाम् ।
जाया दासी नीचमूढग्रहांशे दुष्टा वा स्याद्यैवने भर्तृहीना ॥ ७॥

शुभाम्शराशौ यदि सद्गुणाढ्या शुभेक्षिते चारुतरं कलत्रम् ।
चन्द्रांशके दुर्बलचन्द्रराशौ जाता पतिग्नी सबले तु साध्वी ॥ ८॥

अर्कांशे कुलटा निजोच्चगृहगे साध्वी शुभालोकिते
लग्ने शीतकरेऽथवा मदनभे नीचारिमूढान्विते ।
पापव्यालविहङ्गपाशनिगलद्रेक्काणभागान्विते
सन्ध्यंशे विगतब्रता च विधवा जातस्य जाया भवेत् ॥ ९॥

कामस्थे तनुपे शुभग्रहयुते सद्वंशजामिच्छति
क्रूरर्क्षे मदगे विलग्नरमणे दुर्वंशजाताङ्गनाम् ।
वर्णं रूपगुणाकृतिं च सकलं यतद्ग्रहोक्तं वदेत्
दुङ्यार्पारकरग्रहाकृतिनरप्रीतिं प्रयात्यङ्गना ॥ १०॥

पापाप्रकाशसंयुक्ते कलत्रे दुष्टचारिणी ।
रवौ बन्ध्या तु शीतांशौ क्षीणे तु व्यभिचारिणी ॥ ११॥

कुजे तु भ्रियते मन्दे दुर्भगाराहुसंयुते ।
परदारोऽरतिः स्वीयां निषेकाभावकोऽसुतः ॥ १२॥

धूमे विवाहहीनः स्यान्भ्रयते कार्मुके सति ।
परिवेषे तु दुःशीला केतौ बन्ध्या सती भवेत् ॥ १३॥

काले विदारः पापे तु गर्भस्त्रावेण संयुता ।
सुशीला स्त्री प्रसूता च पूर्यमाणे सुधाकरे ॥ १४॥

बुधे सुपुत्रा वागीशे गुणयुक्ता सुपुत्रिणी ।
शुक्रे सौभाग्यसंयुक्ता श्रीमती च बलान्विते ॥ १५॥

स्त्रीपुत्रपे बलिनिशोभनखेटदृष्टे षष्ठाधिपेन सहिते सति विक्षिते वा ।
जारेण पुत्रनिलाभमुपैति जाया तस्या धवो वहुकलत्रयुतोऽप्यपुत्रः ॥ १६॥

नीचे गुरौ मदनगे सति नष्टदारो मीने कलत्रभवने रविजे तथैव ।
मन्दारराशिनवभागगते सुरेज्ये जारो भवेदिनसुतारसमन्विते वा ॥ १७॥

सुवंशजातं प्रथमं कलत्रं लग्नेश्वरो दारपसंयुतश्चेत् ।
दिनेशकान्त्याभिहतस्तदानी स्वरूपहीनां सुतरां वदन्ति ॥ १९॥

वित्ते पापबहुत्वे च कलत्रेशे तथास्थिते ।
अशत्रुस्वानगते केतौ कलत्रत्रयभाग्भवेत् ॥ २०॥

केन्द्रत्रिकोणे दारेशे स्वोच्चमित्रस्ववर्गगे ।
कर्माधिपेन वा दृष्टे बहुस्त्रीसहितो भवेत् ॥ २१॥

कलत्राधिपतौ केन्द्रे शुभग्रहनिरीक्षिते ।
शुभाम्शे सुभराशौ वा पत्नी व्रतपरायणा ॥ २२॥

दाराधिपे सोमसुते सपापे नीचारिवर्गे रिपुनाशभावे ।
पापान्तरे पापदृशा समेते जाया पतिघ्नी कुलनाशिनी स्यात् ॥ २३॥

शुभांशे शुभ्संदृष्टे नाथे जाया सुवंशजा ।
पापारूढे पापवर्गे तस्य जाया कुवंशजा ॥ २४॥

कामस्थाने सखेटे सितयुतस्वचरैर्दरसंस्व्यां - वदन्ति
स्वोच्चस्वङ्षोमवासो न भवति गणने शुक्रयुक्तग्रहैर्वा ।
जायाधीशे सितर्क्षे सति धनभवने शुक्रसंयुक्तसंख्या
शुक्रानङ्गेशयुक्तद्युचरनववधूवल्लभो जायते वा ॥ २५॥

दारेशेन कुटुम्बपेन सहिता यावद्ग्रहा दुर्बला-
स्तत्संख्याककलत्रनाशनकरा दुःस्थानाथा यदि ।
यावन्तो बलशालिनः शुभकरास्तत्तुल्यजायासुखं
कुर्वन्त्येकवियच्चरो बलयुतो यद्येकदारो भवेत् ॥ २६॥

अथ विवाहकाज्ञः ।

लग्नानङ्गपतिस्फुटैव्यगृहगे जीवे विवाहं वदे-
च्चन्द्राधिष्ठिततारकावधुपयोरैक्यांशके वा तथा ॥

जीवे मित्रनवांशके बलयुते यद्येकदारान्वितः

स्वांशे द्वित्रिकलत्रवान् बहुवधुनाथः स्वतुङ्गांशके ॥ २७॥

कलत्रनाथस्थितभांशकेशयोः सितक्षपानायकयोर्बलीयसः ।
दशागमे द्यूनयुक्तभांशकत्रिकोणगे देवगुरौ करग्रहः ॥ २८॥

शुक्रोपेतकलत्रराशिपदशामुक्तोविवाहप्रदा
लग्नाद्वित्तपतिस्थराशिपदशाभुक्तौ च पाणिग्रहः ।
कर्मायुर्भवनाधिनायकदशाभुक्तौ विवाहः क्रमात्
कामेशेन यूतः कलत्रगृहगस्तत्पाकमुक्तौ तु वा ॥ २९॥

सौम्यवुओमचरः स्थितः शुभगृहे चादौ ददाति श्रियं
पापर्क्षे शुभखेचरो यदि दशामध्ये विवाहादिकम् ।
क्रूरः पापगृहोपगो यदि फलं पाकावसाने तथा
सौम्य्रक्षे यदि सर्वकालफलदः सौम्यान्वितः शोभनः ॥ ३०॥

लग्नेश्वरस्थितनवांशपतिः स्वराशौ चन्द्रे पुरन्दरगुरौ च कलत्रलाभम् ।
कामेशसुक्रगृहगेऽमरमन्त्रिणिन्दौ केन्द्रेऽथवा गुरुयुते सति गोचरेण ॥ ३१॥

यसंख्याकमजादि कामभवनं तद्वत्सरे वा नृणां
साष्टाब्दे कृतभौङ्जिकर्मपरतः कन्यानकालो भवेत् ।
लग्नादस्तविलग्ननायकयुतक्षेत्रांशके सभवा
या सा भर्तृमनःप्रसादकरणि भर्ता तथैव स्त्रियाः ॥ ३२॥

कामान्वितेक्षकवियणरराशिजाता चन्द्रादतीव सुभगा च पतिप्रिया स्यात् ।
स्त्रीजातके च पतिरिष्टकरो वधूनां दिग्देशजा भृगुसुतादबलाधिपय ॥ ३३॥

अथ वरवधूजातकसंयोगः ।

धनावसानस्मरयानरन्ध्रगो धरासुतो जन्मनि यस्य दारहा ।
तथिव कन्याजनजन्मलग्नपो यदि क्षमासूनुरनिष्टदः पतेः ॥ ३४॥

क्रूरव्योमचरः स्त्रीणामष्टमस्थो विलग्नतः ।
नीचारिपापवर्गेषु यदि मृत्युकरः पतेः ॥ ३५॥

द्यूनकुटुम्बगतौ यदि पापौ दारवियोगजदुस्वकरौ तौ ।
ताद्राशयोगजदारयुतश्चेज्जीवति पुत्रधनादियुतश्च ॥ ३६॥

कलत्रराशित्रितयेऽथवा स्यात्तदीशसंयुक्तभराशिकोणे ।

कलत्रराशिर्यदि पुत्रशाली तदान्यराशिर्यदि पुत्रहीनः ॥ ३७॥

अथ स्त्रियाः स्तनविचारः ।

काठिन्योरुकुचा मदे दिनकरे कामाधिपे केन्द्रगे
जीवेन्दुज्ञसितान्विते गुरुकुचा शुष्कस्तना भूमिजे ।
लम्बापीनपयोधरा सगुलिकच्छायासुताहिग्ह्वजे
धूमादौ विषमाकृतिस्तनवती दुःस्थेऽथवा कामपे ॥ ३८॥

अथ गम्यस्त्रीविचारणम् ।

बन्ध्यासङ्गमिनेऽस्तगे समवधूकेलि निशानायके
भूपुत्रे तु रजस्वलाजनरति बन्ध्यावधूमेति वा ।
वेश्यामिन्दुसुते तु विप्रवनितां जीवे सिते गर्भिणी
नीचस्त्रीरतिमर्कजोरगशिस्त्विप्राप्तेऽथवा पुष्पनीम् ॥ ३९॥

अथ स्त्रीसङ्गमे स्थानविचारः ।

क्रीडागरमिने वनं सुखगते चारु स्वगेहं विधौ
भूपुत्रे सति कुड्यमिच्छति बुधे जातो विहारस्थलम् ।
जीवे देवगृअं सिते तु सलिलं मन्देऽथवा पत्रगे
केतौ भाधवशक्करप्रियसुतस्थानं वधूसङ्गमे ॥ ४०॥

शुक्रांशे मदनस्थितेऽवनिसुते कामाधिपे पङ्चमे
जायारिष्टमुपैति सप्तमगते भानौ कलत्रार्थवाण् ।
दुःस्थौ कामकुतुम्बपौ सभृगुजौ दुश्चिक्ययात् तु वा
तस्मद्ख्याककलत्रहा बलयुतौ वित्तास्तपौ दारवाण् ॥ ४१॥

अथ भगचुम्बनयोगः ।

जातः समेति भगचुम्बनसन्तनाथे शुक्रेण वीक्षितयुते भृगुमन्दिरे वा ।
एवं कुतुम्बभववाधिपतौ तथा स्याद् दारर्क्षगे दशमपे ससिते तथैव ॥ ४२॥

अथ स्त्रिया भगविचारः ।

कामेश्वरे देवगुरुः सितो वा समं भगं चारुतरं तरुण्याः ।
ह्रस्वं भगं सप्तमराशिनाथे शनीन्दुतारासुतमध्याते ॥ ४३॥

दीर्घं समेति भगमस्तपतौ जलर्क्षे तत्कारके जलगृहोपगते तथैव ।
सार्द्रं भगं मदनगे भृगुवीक्षितेऽब्जे गुह्यं त्वनार्द्रमुपयाति वधूः सपापे ॥ ४४॥

लग्नेशस्थनवांशनाथगृहगे जीवे समेति स्त्रियं
नीचारातिनवांशके सति मृतस्त्रीको विदारेऽथवा ।
लग्ने कामपतिस्फुटादपह्रते राशित्रिकोणे गुरौ
लग्ने सप्तमराशिपस्फुटह्रते जीवे मृतिं योषितः ॥ ४५॥

लग्नात्कामपकारकौ शुभकरौ वीर्याधिके सप्तमे
पत्या साकमुपैति भृत्युमबला षापैर्युक्तेक्षिते ।
कामच्छिद्रदशापहारसमये शुक्राष्टवर्ग्दिते
राशौ भानुसुते कलत्र करणं जीवे तदाम्शान्विते ॥ ४६॥

मदनभवननाथे परिजातादिवर्गे सुरगुरुयुतदृष्टे शोभनस्थानयाते ।
दधिमधुधृतसूपक्षीरपकोपदंशैः सह शुचि रुचिरात्रं चारुकान्तामुपैति ॥ ४७॥

इति सप्तमभावविचारः ।

अथाष्टमभावफलम् ।

आयुर्दायमनिष्टहेतुमुदयव्योमायुरीशार्कजै-
रुक्तं तत्सकलं तथापि निधनप्राप्तिं प्रवक्ष्ये पुनः ।
चल्पायुर्व्ययगेऽथवा रिपुगते पापान्विते रन्ध्रपे
लग्नेशेन युते तु तत्र विबले जातोऽल्पजीवी नरः ॥ ४८॥

स्वस्थे रन्ध्रपतौ चिरायुरुदयाच्छिद्राधिपौ षष्ठगौ
रिष्फस्थौ यदि वा समेति मनुजो जातश्चिरायुर्बलम् ।
ज्यापारोदयरन्ध्रराशिपतयः केन्द्रत्रिकोणायगा
दीर्घायुविबलाः सभानुतनया यद्यल्पमायुर्वदेत् ॥ ४९॥

कर्मेशरन्ध्रतनुपा बलशालिनश्चेज्जातश्चिरायु रिननन्दनयोगहीनाः ।
द्वावप्यतीव बलिनौ यदि मध्यमायुरेको बली तधुतरायुरनायुरन्यः ॥ ५०॥

रन्ध्राधिपे पापगृहोपयाते दुःस्थानगे पापयुतेऽल्पमायुः ।
शुभान्विते शोभनराशियुक्ते शुभेक्षिते रन्ध्रगते चिरायुः ॥ ५१॥

नाशस्थे तनुपेऽथवा निधनपे पापेन युक्तेक्षिते
मूढेऽदृश्यगतेऽथवा रिपुगृहे जातो गतायुर्भवेत् ।

जीर्घायुर्निजतुङ्गगे शुभयुते केन्द्रत्रिकोणेऽथवा
रन्ध्रे रन्ध्रपतौ चिरायुरुदयं यातो विलग्नाधिपे ॥ ५२॥

लग्नादन्त्यगृहाधिपे बलवति स्वर्क्षे चिरायुः सुखी
लग्नेशो यदि रन्ध्रपश्च बलिनौ केन्द्रस्थितौ चेत्तथा ।
आधानोदयराशिऽष्टमगृहान्मेषुरणं जन्मभं
शुक्रज्ञामरवन्दितेक्षितयुतं यद्यायुरारोग्यभाक् ॥ ५३॥

अथ मृत्युविचारः

रन्ध्रेशे रिपुरन्ध्ररिष्फगृहगे तत्पाकभुक्तौ मृतिं
मन्दाकान्तगृहेशपाकसमये रन्ध्रेशभुक्तौ तथा ।
पाके रन्ध्रगृहाधिपस्य तदनुक्रान्तस्य भुक्तौ तु वा
खेटानां बलदुर्बलेन सकलं संचिन्त्य यत्तद्वदेत् ॥ ५४॥

लग्नेशे निधनारिरिष्फगृहगे साहौ सकेतौ तु वा
होरारन्ध्रपसंयुतग्रहदशा जातस्य मृत्युप्रदा ।
तत्खेटान्वितराशिनायकदशा नाशप्रदा देहिनां
खेटानां प्रथमागतस्य फणिनः पाकापहारे क्रमात् ॥ ५५॥

व्यापाररन्ध्रतनुनाथशनैश्चराणां मध्ये विधुन्तुदयुतो विबलग्रहो यः ।
तत्पाकभुक्तिसमये मरणं नराणां तद्युक्तवीक्षकनभोगदशान्तरे वा ॥ ५६॥

नाशे नाशपतौ तु तद्ग्रहदशाभुक्तौ समेत्यामयं
लग्ने लग्नपतौ तु लग्नपदशाभुक्तौ शरीरातिभाक् ।
पश्चादामयनाशनं तनुसुखं मोदश्च सञ्जायते
रन्ध्रेशे बलसंयुते तनुपतेर्दाये मृतिर्देहिनां ॥ ५७॥

जातस्य जन्मसमये विबले विलग्ने लग्नेशरन्ध्रपतिपाकलतिव कष्टम् ।
पश्चादतीव सुखमेति विलग्ननाथे वीर्यान्विते निधनपस्य मृतिं दशायाम् ॥ ५८॥

देहेशे च विनाशपे बलयुते केन्द्रत्रिकोणस्थिते
तद्युक्तग्रहपाकभुक्तौसमये रोगापवादः फलम् ।
रन्ध्रेशस्तनुपश्च खेचरयुतौ केन्द्रत्रिकोणस्थितौ
रन्ध्रस्थानगतस्य पाकसमये मृत्युं समेति ध्रुवम् ॥ ५९॥

नो चेदष्टमखेचरौ यदि तनुप्राप्तेन सङ्चिन्तये-
न्मन्दे लग्नगतेऽथवाष्टभगते तत्पाकभुक्तौ मृतिः ।

रन्ध्रेशोदयनायकौ सखचरौ युक्तग्रहो दुर्बलो
यस्तस्य द्युचरस्य पाकसमये भुक्तौ च मृत्युं वदेत् ॥ ६०॥

लग्नात्पङ्चमराशिपेन सहितव्योमाटनानां दशा-
संख्याभानुहृतावशेषगृहगे मृत्युं दनेशे सति ।
पुत्रेशो न वियच्चरेण सहितः स्वाब्देन सङ्चिन्तये-
ल्लग्नेशेन युताब्दमङ्गविहृतः संक्रान्तिपूर्वं दिनम् ॥ ६१॥

त्रिकोणे केन्द्रे वा यदि पितृतनुक्षेत्रपतयो
दशाभुक्तौ तेषामनुमरणमाहुर्मुनिगणाः ।
सभौमे मन्दाढ्ये फणियुजि तु वेन्दुअ निधनगे
त्वपस्मारस्तस्मान्मरणमथवेन्दौ कृशतनौ ॥ ६२॥

चन्द्रे वित्तगतेऽथवा निधनगे जातो बहुस्वेदवाम्
कर्मस्थानगते कुजे बुधयुते दुर्गन्धदेहो भवेत् ।
पापे रन्ध्रगते तु पापसहिते रोगप्रभादाकरः
सौम्यव्योमगृहेऽतिशोभनयुते जातः समोदः सुखी ॥ ६३॥

शीर्षोदयेषु चरभादिषु वित्तपस्य लग्नाधिपस्य भुजगस्य दशापहारे ।
पृष्ठोदये सति तदीयदृगाणपस्य तद्वीक्षितादिसहितस्य मृतिं वदेद्वा ॥ ६४॥

इति अष्टमभावफलविचारः

अथ नवमभावफलम् ।

भाग्यप्रमावगुरुधर्मतपःशुभानि संचिन्त्येन्नवमदेवपुरोहिताभ्याम् ।
भाग्येशदेवसचिवौ शुभवर्गयातौ भाग्ये शुभग्रहयुते समुपैति भाग्यम् ॥ ६५॥

पापारिनीचरविलुप्तकरा नभोगा भाग्यस्थिता यदि यशोधनधर्महीनाः ।
पापेऽपि तुङ्गजमित्रगृहोपगश्चेद्भाग्ये तु भाग्यफलदः सततं नराणाम् ॥ ६६॥

सौम्यस्वामियुतेक्षितं नवमभं भाग्यप्रदं प्राणिनां
तद्राशीशसमेतराशिरमणो भाग्यस्य कर्त्ता भवेत् ।
भाग्येशाः परिपाचको भवति तत्पुत्रेश्वरो बोधक
स्तुङ्गस्वर्क्षगृहोपगो यदि चिरं भाग्ये प्रकुर्वन्ति ते ॥ ६७॥

भाग्यस्थे दशवर्गजोच्चभवनस्वांशस्थिते पङ्चके
भाग्यं श्रीविपुलं समेति नृपतिस्तत्स्वामियुक्तेक्षिते ।

चत्वारे बलशालिनो नवमगा भाग्यं प्रयच्छन्ति ते
तुङ्गस्वांशगताः स्वदेशविभवं त्वन्यत्र चान्याम्शगाः ॥ ६८॥

अथ नवमे गुरौ ग्रहदृष्टिफलानि ।

भाग्ये तत्पतोशोभनेक्षितयुते भाग्यं समेति ध्रुवं
धर्मे पापयुते भृगौ शशिनि वा जातो गुरुस्त्रीरतः ।
दृष्टेऽर्केण गुरौ नृपः क्षितिभुवां मन्त्री बुधेनार्थवान्
शुक्रेणाश्वपतिः सुखी तु शशिना मन्देन चोष्टादिभाख़् ॥ ६९॥

विद्वान् वारणगोतुङ्गधनवानिन्द्वर्कदृष्टे गुरौ
सेनावाहनरत्नवान्नवमगे जीवेकुजार्केक्षिते ।
विद्यावादविनोदवित्तविपुलः सूर्येन्दुजालोकिते
शुक्रादित्यनिरीक्षिते विनयवाग् जीवे तपःस्थानगे ॥ ७०॥

मन्ददित्यनिरीक्षिते गुणनिधिः प्राज्ञो बहुग्रामवान्
जीवे चन्द्रकुजेक्षिते पृथुयशाः सेनासुखश्रीयुतः ।
तारेशेन्दुप्रविलोकिते गृहसुखश्रेष्ठार्थशय्यासनः
शुक्रेन्दुप्रविलोकिते वितनयः शूरो धनी कर्मकृत् ॥ ७१॥

चन्द्रादित्यसुतेक्षिते तु गुणवान् वादी विदेशं गतो-
जीवे शुक्रबुधेक्षिते नवमगे विद्याधिको जायते ।
सर्वव्योमचरेक्षिते नरवरो राजा बहुद्रव्यवान्
सौभाग्याचरराज्यवित्तफलदाः सर्वे तपःस्थानगाः ॥ ७२॥

नवमे द्विग्रहयोगफलानि

भाग्यस्थे शशिनि प्रभाकरसुतज्ञारेक्षिते भूपति-
स्तुङ्गव्योमचरे तपःस्थलगते भूपः शुभालोकिते ।
सेन्दौ तिग्मकरे तु तत्र धनिको नेत्रामयार्त्तो भवेद्
दुःखी वादरतः कुजेन सहिते भानौ नृपालप्रियः ॥ ७३॥

भानौ सेन्दुसुते सपत्नबद्दुलो दुःस्वी रुगार्तः सदा
वागीशेन युते पितृप्रियकरो जातः स्वयं वित्तवान् ।
रोगी शुक्रयुते रवौ शनियुते ग्र्णः पिता कुक्षिरुक्
चन्द्रे सावनिनन्दने तु जननीहन्ता धनत्यागवान् ॥ ७४॥

वाग्मी शास्त्रकलापवान् नवमगे चन्द्रे सतारसुते

सेन्दौ मन्त्रिणि धीरधीर्नरवरः श्रीमान् गुरुस्थानगे ।
तारेशे कुलतापतिः सभृगुजे सापत्नमातृप्रिय-
श्चन्द्रे मन्दयुते विधर्मगुणवान् माता कुलप्रच्युता ॥ ७५॥

शास्त्री भोगसुखी कुजे बुधयुते सेव्ये धनी पूजितः
शुक्रेण द्विवधूपतिः सहकुजे वादी विदेशं गतः ।
भौमे भानुसुतान्विते नवमगे पापी परास्त्रीरतः
सौम्ये सामरवन्दिते पटुमतिविद्वान् धनी पण्डितः ॥ ७६॥

प्राज्ञो गीतरतिप्रियः सभृगुजे चन्द्रात्मजे पण्डितः
सौम्ये मन्दयुते तु रोगितनुको वित्ताधिकोऽसत्यवाक् ।
जीवे शुक्रयुते चिरायुरधिकश्रीमान् समन्दे गुरौ
रोगीरत्नधनः सितेऽसितयुते भूपालतुल्यो भवेत् ॥ ७७॥

अथ नवमे त्रिग्रहयोगफलानि ।

रवीन्दुभौमा नवमोपयाता यदि क्षताङ्गः पितृमातृईनः ।
हिंसी विकर्मा राविचन्द्रसौम्या रविन्दुजीवाः सुखवाहनाढ्यः ॥ ७८॥

चन्द्रार्कौससितौ वधूकलहकृद् राजप्रियो वित्तहा
भाग्यस्थौ रविशीतगू शनियुतौ भृत्यो विरोधि सताम् ।
रव्यारौ सबुधौ तु तत्र सुभगः क्रुद्धो विवादप्रियः
सेज्यौ देवपितृप्रियः सुतवधूवित्तान्वितो जायते ॥ ७९॥

सूर्यारौ ससितौ विवादनिरतः कोपी वधुदुषक-
श्छायासूनुयुतौ विबन्धुरधनोसाधुः पितुमारकः ।
धर्मस्थौ रविचन्द्रजौ गुरुयुतौ राजप्रियो वित्तवान्
साच्छ्यौ राजसम्ः सभानुतनयौ पापी परस्त्रीपतिः ॥ ८०॥

जीवार्कौ सितसंयुतौ परवधूसक्तो धनी पण्डितः ।
सार्की जीवदिवाकरौ यदि विटस्वामी तपःस्थानगौ ।
आदित्यासितभार्गवा नवमगा हीनो नृपैर्दण्डतो
बाल्ये तप्तमनाः सुखी च परतश्चन्द्रारशीतांशुजाः ॥ ८१॥

देवाराधनतत्परो नवमगैश्चन्द्रारवागीश्वरै-
र्जातो नष्टकलत्रवान् क्षततनुः शुक्रेन्दुभूनन्दनैः ।
क्षुद्रो मातृहरो महीपतिसमश्चन्द्रारसूर्याम्तजै-
राचार्यो धनवान् विभुश्च रजनीनाथज्ञदेवाचिंचतैः ॥ ८२॥

मातुः सपत्नीजनको विभुः स्यात् चन्द्रज्ञशुक्रा नवमोपयाताः ।
पापी विवादप्रियबुद्धियुक्तो जातः सुधारशिमबुधार्कपुत्राः ॥ ८३॥

चन्द्रामरेज्यौ ससितौ महीपः सार्कात्मजौ सद्गुणकर्मशीलः ।
मन्दज्ञशुक्रा नरपालतुल्यः कृषिक्रियावित्तपरो गुरुत्थाः ॥ ८४॥

राजप्रियो माण्डलिकः सजीवीभावस्थितौ भुसुतचन्द्रपुत्रां ।
शास्त्री सशुक्रौ चपलश्च भीरुः सभनुजौ वाद समर्थः ॥ ८५॥

ख्यातो विद्वान् धर्मवान् जीवसौर्यौ धर्मस्थाने ॥। ।
विद्यावान्मी सासितौ धर्मरतो रा ॥॥॥॥॥॥॥॥॥। ॥ ८६॥

जातः साहसविक्रमार्जितधनः सूर्यरजीवार्कजैः
शूरः सर्वगुणप्रप[न्चरसिकः युक्रारजीवेन्दुभिः ।
षट्पङ्चत्रिचतुर्विशच्चरयुते भाग्ये समेति ग्रियं
राजत्यं सबुधे विबोधनगुरौ जातः समेत्यश्रियम् ॥ ८७॥

जनयन्ति भाग्यसंस्था गुरुसौम्यविवर्जिता ग्रहा पुरुषम् ।
व्याधिप्रायमकान्तं जनहीनं बन्धनार्तमतिदीनम् ॥ ८८॥

भाग्याधिपे विनाशस्थे नीचसत्रुस्वगेक्षिते ।
क्रूरांशे नीचराश्यादौ भाग्यहीनो भवेन्नरः ॥ ८९॥

भाग्याधिपे शुभयुते शुभग्रहनिरिक्षिते ।
तद्भावे शुभसम्बन्धे तत्कीर्तिधनभाग्यवान् ॥ ९०॥

सिंहासनांशे तन्नाथे लग्नेशेन निरीक्षिते ।
कर्माधिपेन संदृष्टे ॥॥॥ऽकरो भवेत् ॥ ९१॥

जातः पुरोहितो ॥॥॥॥॥॥॥॥॥॥॥॥॥। ।
दानाध्यक्षोपकारी ॥। वर्णमेदविकल्पना ॥ ९२॥

गुरौ तद्भावसंयुक्ते नवांशाधिपतौ तथा ।
शुभग्रहेक्षिते वाऽपि गुरुभक्तियुतो भवेत् ॥ ९३॥

गुरुस्थाने सौम्ययुते गुरुवर्गसमन्विते ।
तदीशे गुरुभागस्थे गुरुभक्तिरतः सुखी ॥ ९४॥

गुरुशुक्रबुधांशस्थे धर्मनाथेन वीक्षिते ।
शुभग्रहाणां मध्यस्थे धर्मकृत्स नरो भवेत् ॥ ९५॥

धर्मे पापे पापभाक् स्यात् तदीशे पापसंयुते ।
क्रूरषष्ट्यंशके वाऽपि धर्महीनो भवेन्नरः ॥ ९६॥

बलवति शुभनाथे केन्द्रकोणोपयाते शुभशतमुपैआति स्वामिदृष्टे विलग्ने ।
सुरगुनवभागस्त्रीम्शदंशत्रिभागे दशमभवनपे वा वीतभोगस्तपस्वी ॥ ९७॥

सकलगगनवासाः स्वोच्चगा भाग्यराशौ धनकनकसमृद्धिं श्रेष्ठमुत्पादयन्ति ।
यदि शुभस्वचरेन्दैस्तत्र दृष्टा नभोगा विनिहातरिपुपक्षौ दिव्यदेहः सुकीर्तिः ॥ ९८॥

तातेशतत्कारकखेचरेन्द्रौ दुःस्थौ तयोः पुत्रमुखं न दृश्यम् ।
केन्द्रत्रिकोणे यदि तौ नभोगौ वदेतयोः पुत्रमुखं हि दृश्यम् ॥ ९९॥

इदनीं जातस्य पितुर्मरणं दिने रावौ स स्यादित्याह ।

पितुर्नशायां मरणं सुखेशशुक्रेन्दवः षष्ठगता बलाध्याः ।
नारीश्वरास्तन्भरणं तथैव चन्द्रेण हीनास्तु दिवा मृतः स्यात् ॥ १००॥

सौम्ये चराद्यभागस्थे भाग्येशे बलसंयुते ।
गुरुशुक्रयुते दृष्टे जपध्यानसमाधिमान् ॥ १०१॥

देवलोकदिभागस्थे कर्मेशे भाग्यपेऽपि वा ।
पारावतांशके सौम्ये ब्रह्मनिष्टापरो भवेत् ॥ १०२॥

पारावतादिभागस्थे धर्मेशे गुरुसंयुते ।
लग्नेशे गुरुसंदृष्टे महादाकरो भवेत् ॥ १०३॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते चतुर्दशोऽध्यायः ॥ १४॥

अथ दशमैकादशद्वादशभावफलाध्यायः ॥ १५॥

तत्र दशमभावफलम् ।

आज्ञामानविभूषणानि वसनव्यापारनिद्राकृषि-
प्रव्रज्यागमकर्मजीवनयशो।विज्ञानविद्याः क्रमात् ।
लर्मस्वामिदिनेशबोधनगुरुच्छायासुतैश्चिन्तये-
दुक्तानि प्रविहाय पूर्वशुभे मानी विमानो भवेत् ॥ १॥

अथ कर्मविचारः ।

कर्मेशे बलवर्जिते चपलधीर्जतो दुराचारवान्
जीवज्ञासितभानवो विबलिनो दुःस्था विकर्मप्रदाः ।
गङ्गात्स्नानफलं समेति दशमे राहौ दिनेशेऽथवा
मीने कर्मणि चन्द्रजारसहिते जातः स भुक्तो भवेत् ॥ २॥

भानेश्वरे शुक्रयुते च केन्द्रे तुङ्गस्थिते तादृशतोयपूतः ।
व्यये बुधे तद्भवनाधिपे वा स्वोच्चान्विते तादृशपुण्यभाक् स्याट् ॥ ३॥

चन्द्रे कर्मणि जाह्नवीसलिलतः पूतो हि पूतद्युतौ
पापो यच्छति कर्मगो विबलवान् द्युतक्रियासाहसम् ।
सौम्या दुर्बलशालिनो दशम्गाः सत्कर्मविध्वंसकाः
कर्मेशज्ञसुराचितैः क्रतुफलं सङ्चिन्त्य सम्यग्वदेत् ॥ ४॥

एकस्थौ तनुकर्मपौ यदि तयोरेकाधिपत्यं तु वा
जातः स्वार्जितसद्धनेन कुरुते यज्ञादिकर्मोत्सषम् ।
सार्कौ शूद्रधनेन साहिशिखिनि क्षुद्रैः सजीवे नृप-
स्तत्तत्कारकवित्ततो यदि युते रव्यादिभिः कर्मपे ॥ ५॥

बहुशुभयुजि नाने वाजपेयादिसिद्धिः सितवुधयुतराशिस्त्रामिनौ दुर्बलाध्यौ ।
यदि कृतसवनोऽपि प्राप्रकर्मप्रनष्टो भवति परमकर्मा दानवाचारशीलः ॥ ६॥

चन्द्रात् कर्मणि सोभने बलयुते तुङ्गादिवर्गस्थिते
वागीशेन युतेक्षिते नरवरो यज्वा यशस्वी भवेत् ।
जीवज्ञासुरपूजितस्थितगृहाधीशा विनाशं गता
जातः सत्फलकर्मवानपि कृतां कर्मश्रियं नाप्नुयात् ॥ ७॥

कर्मेशज्ञसुराचिंता बलयुत यज्ञादिसत्कर्मदाः
सौम्यव्योमचरेण वीक्षितयुतास्ते वाजपेयादिभाक् ।
जीर्णोद्धारणसुख्यगोपुरतटाकारामपुण्यप्रदा
यज्वा कर्मपतौ शुभे शशियुते माने विराहुव्यजे ॥ ८॥

उच्चस्थे ययिजेऽहिकेतुविशुते भाग्शोपशातेऽथवा
कर्मस्वामिनि भाग्शगे च मनुजो शागादिसत्कर्मवान् ।
कर्मेये निजतुङ्गे बुधयुते तारासुते चास्तगे
तुङ्गस्थानगते सति क्रतुफलं जातः समेति ध्रुवम् ॥ ९॥

कर्मस्थे शशिनिन्दने सवनकृत्साहिध्वजे कर्महा
कर्मेशे रिपुरन्ध्ररिष्फगृहगे कर्मावरोधी भवेत् ।
कर्मेशस्य बुधस्य कर्मभवने राहौ मस्वध्वसक-
स्तुङ्गस्थानगतोऽपि कर्मगृहपो दुःस्थानगः कर्महा ॥ १०॥

व्यापारधर्मभवते शुभखेटयुक्ते तन्नाथजीवतनुपा बलशालिनश्चेत् ।
आचारधर्मगुणकर्मविधिप्रयुक्तश्रद्धपरो भवति विप्रकुलाग्नगण्यः ॥ ११॥

ज्ञानव्योमाधिवासास्तनुगुरुदशमस्थानपाः षड्बलाढ्या
जातः षट्शास्त्रवेत्ता निखिलनिगमविज्ज्ञानदीक्षामुपैति ।
धर्मव्यापारलग्नाधिपबुधाचार्यपाकापहारे
सत्कर्माचारसर्वक्रतुफलनिगमज्ञानविद्याकरः स्यात् ॥ १३॥

चन्द्रे तृतीये जलराशियुक्ते करोति जीर्णोद्धरणादि पुण्यम् ।
तटाककूपादिकमत्र लग्नात् कर्मेश्वरे गोपुरभागयुक्ते ॥ १४॥

अथ प्रव्रज्यायोगः ।

जातः पङ्चचतुर्वियच्चरवरैः केन्द्रत्रिकोणस्थितै-
रेकस्थैर्बलिभिः प्रधानबलवत्खेटास्रमस्थो भवेत् ।
आदित्यासितजीवशुक्रधरणीपुत्रेन्दुताराहुतै-
र्वानप्रस्थविवासभिक्षुचरकाः शाक्त्यो गुरुर्जीवकः ॥ १५॥

वानप्रस्थस्तपस्वी वनगिरिनिलयो नग्नशिलो विवासा
भिक्षुः स्यादेकदण्डी सततमुपनिषत्तत्त्वनिष्टो महात्मा ।
नानादेशप्रवासी च्रकपतिवरः शाक्ययोगी कुशीलो
राजश्रीमान् यशस्वी गुरुरशनपरो जल्पको जीवकः स्यात् ॥ १६॥

कर्मस्था बलिनस्त्रयो गगनगाः खोच्चादिवर्गस्थिताः
कर्मेशश्च बलाधिको यदि यतिस्तत्तल्यशीलोऽथवा ।
कर्मेशे बलवर्जिते गृहगृहप्राप्ते दुराचारवान्
तद्योगप्रदमध्यगौ धनदस्थानाधिपौ कामधीः ॥ १७॥

तद्योगप्रदखेचरैरिनशनिक्षिओनीकुमारान्वितैः
सन्यास समुपैति वित्ततनयस्त्रीवर्जितो मानवः ।
सौम्यांशोपगतः सहस्रकिरणस्तुङ्गातभागस्थितं
खेटं पश्यति यौवने वयसि वा बाल्ये यतीशो भवेत् ॥ १८॥

शुक्रेन्दुप्रविलोकिते गतबले लग्नाधिपे निर्द्धनो
भिक्षुः स्याद्यदि तुङ्गभांशकयुतस्तारापति पश्यति ।
एकस्थैरविलोकिते तु बहुभिर्लग्नेश्वरे दीक्षित-
स्तद्योगप्रदभावकारकदशाभुक्तौ तदीयं फलम् ॥ १९॥

शीतांशुराशीशमिनात्मजो वा लग्नेश्वरः पश्यति दीक्षितः स्यात् ।
भौमर्क्षगे मन्ददृगाणभागे मन्देक्षिते शीतकरे यदिः स्यात् ॥ २०॥

जीवारमन्दलग्नेषु मन्ददृष्तियुतेषु च।
लग्नाद्धर्मगते जीवे नृपयोगेऽपि तीर्थकृत् ॥ २१॥

नवमस्थानगे चन्द्रे नभोगैर्नावलोकिते ।
नृपयोगेऽपि सञ्जातो दीक्षितो नृपतिर्भवेत् ॥ २२॥

सुरगुरुशशिहोरास्वाकिदृष्टासु धर्मे गुरुरथ नृपतीनां योगजस्तीर्थकृत् ।
नवमभव्नसंख्ये मन्दगेऽन्यैरदृष्टे भवति नरपयोगे दीक्षितः पार्थिवेन्द्रः ॥ २३॥

सितार्कभौमार्कसुता महाबलाः सुरेज्यभूनन्दनभानुभानुजाः ।
कुजेन्दुवागीशशनैश्वरा इमे समं गताश्चेज्जनयन्ति तापसम् ॥ २४॥

ग्रहैश्चतुर्भिः सहिते तदीशे केन्द्रत्रिकोणोपगतैस्तु मुक्तः ।
चतुर्ग्रहः कर्मगतैः प्रव्रज्यां प्राप्नोति जातः कथितो मुनीन्द्रैः ॥ २५॥

कुजार्कसोमार्कजदेवव्न्दितैः कुजार्कचन्द्रार्मजमन्दभार्गवैः ।
रवीन्दुभौमासितदानवप्रियैर्भवन्ति जाता व्रतसंयुता नराः ॥ २६॥

सितारसूर्यात्मजजीवभास्करैः कुजेन्दुदेवेज्यबुधार्कनन्दनैः ।
सितेन्दुपुत्रार्किशशाङ्कभूमिजैर्भवेत्तपस्वी वनपर्वताश्रयः ॥ २७॥

चन्द्रेन्दुपुत्रारसुरेज्यभास्करैः शशाङ्कसूर्येन्दुजशुक्रभुमिजैः ।
एकर्क्षगैरेभिरिह प्रजाता भवन्ति विद्यामुनयोऽस्त्रदूषकाः ॥ २८॥

रवीन्दुभौमेन्दुजजीवभार्गवैः सुधाकराराकिंगुरुज्ञभास्करैः ।

कुजेन्दुसूर्यार्किसितेन्दुसम्भवैर्भवेदमीभिः सहितैर्व्रती नरः ॥ २९॥

सितेन्दिजीवार्कजभानुलोहितैः सितार्किजीवार्कभृगाक्कसोमजैः ।
एकत्र शातैर्गगनाटनैः सदा भवन्ति जाता मुनशस्तपस्वनिः ॥ ३०॥

कुहज्ञवागीशसितासितारुणैः सितार्किजीन्दुजचन्द्रभूमिजैः ।
बलप्रधानैर्गनाटनैय्दा यदि प्रजातः पुरुषस्त्पस्विनाम् ॥ ३१॥

स्वीन्दुवाशदिनेशपुत्रैः शनैश्चरेन्द्वर्कसितैरवश्यम् ।
रवीन्दुपुत्रक्षितिजामरेज्यैस्तपस्विनो मूलफलाशनाः स्युः ॥ ३२॥

वक्रार्कसोमात्मजदानवेज्या भौमेन्दुवागीशशशाङ्कपुत्रा ।
एकर्क्षगा ज्न्मनि यस्य जन्तोर्भवेद्यती वल्कलभूतिधारी ॥ ३३॥

शशीन्दुसुनुक्षितिजार्कपुत्रा बुधक्षमापुत्रसुरेज्यसौराः ।
एकत्रगा यस्य नरस्य जातं कुर्वन्ति ते तापसमेव शान्तम् ॥ ३४॥

चन्द्रार्कभार्गवशशाङ्कसुत बलिष्ठा भौमेन्दुपुत्रसितभास्करनन्दनाश्च ।
मन्देन्दुधाक्पतिसिता नियतं यतीनां कुर्वन्ति जन्म कृतवल्कफलाशनानाम् ॥ ३५॥

रविशशिकुजशुक्रैश्चन्द्रभौमङ्यसुर्यैर्गुरुसितरविमन्दैः शुक्रमन्देन्दुजीवैः ।
कुजबुधसितचन्द्रैरेभिरेकर्क्षयातैर्भवति गिरिवनैकास्तापसः सर्वयन्ध्यः ॥ ३६॥

सितशशिकुजगुरुमन्दैश्चन्द्रेन्दुजभौमगुरुशुक्रैः ।
रविकुजशनिबुधजीवैर्भवति यती दुःखितो दीनः ॥ ३७॥

कुजार्किदे ज्यसितेन्दुपुत्रैः शनीनसोमात्मजचन्द्रभौमैः ।
नभश्चरैरेकगृहोपयातैर्जटाधरा वल्कलधारिणः स्युः ॥ ३८॥

भान्विन्दुजेन्दुकुजजीवसुरारिपूज्यैः सूरेन्दुभौमगुरुशुक्रदिनेशपुत्रैः ।
प्राप्नोत्यवश्यमिह तापसरूपमेभिरेकर्क्षगैर्गगनचारिभिरायताक्षः ॥ ३९॥

न वीक्षितश्चेदितरग्रहेन्दैर्लग्नाधिपः पश्यति भानुपुत्रम् ।
लग्नाधिपं वा यदि भानुपुत्रः संन्यासयोगो हि बलेन हीनम् ॥ ४०॥

चन्द्रे भानुसुतेक्षिते रविसुतद्रेक्कणयाते तथा
भिक्षुर्मन्दनिरीक्षिते रविसुतक्षोणिसुतांशे विधौ ।
सन्यासप्रदखेचरः सगुलिकः साहिध्वजो वा यदि

क्रूराम्शोपगतः करोति विगताचारं यतीनां ध्रुवम् ॥ ४१॥

रविलुप्तकरैरदीक्षिता बलिभिस्तद्गतभक्तयो नराः ।
अभियाचितमात्रदीक्षिता निहतैरन्यनिरीक्षितैरपि ॥ ४२॥

अथ जीविकायोगाः ।

अर्थाप्तिः पितृजननीसपत्नमित्रभ्रातृतकजनाहिवाकराद्यैः ।
होरेन्द्वोर्दशमगतैविकल्पनीया भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या ॥ ४३॥

अर्थाप्तिं कथयेद्विलग्नशशिनोर्मध्ये बली यस्ततः ।
कर्मेशस्थनवांशराशिपवशाद् वृत्तिं जगुस्तद्विदः ॥ ४३ १/२॥

अथ ग्रहाणां वृत्तयः ।

भैषज्योर्णतृणाम्बुधान्यकनकव्यापारमुक्तादिकै-
रन्योन्यागमदूतवृत्तिभिरिनस्यांशो तु जीवत्यसौ ॥ ४४॥

जलोद्भवानां क्रयविक्रेण कृषेश्च मृद्वाद्यार्वनोदमार्गात् ।
राजाङ्गनासंश्रयवित्तरूपान्निशाकरांशे वसनक्रयाद्वा ॥ ४५॥

धातोर्विवादेन रणप्रकारात् स्तब्धाग्निवादात् कलहप्रवृत्त्या ।
जीवस्यसौ साहसमार्गरूपाद् धरासुतांशे यदि चौरवृत्त्या ॥ ४६॥

शिल्पादिकाव्यागमशास्त्रमार्गाज्ज्योतिर्गणज्ञानवशाद् बुधांशे ।
परार्थवेदाध्ययनाज्जपाच्च पुरोहिताद्याज्यवशात् प्रवृत्तिः ॥ ४७॥

जीवांशके भूसुरद्वतानामुपासनाध्यापकरूपमार्गात् ।
पुराणशास्त्रागमनीतिमार्गाद्धर्मोपदेशैरकुसीदमाहुः ॥ ४८॥

सुवर्णमाणिक्यगजाश्वमूलाद् गवां क्रयाज्जीवनमाहुरार्याः ।
गुडौदनक्षारदधिक्रयेण स्त्रियाः प्रलोभेन भृगोः सुतांशे ॥ ४॥

शन्याम्शके कुत्सितमार्गवृत्त्या शिल्पादिभिर्दारुमयैर्वधाद्यैः ।
विन्यस्तभाराज्जनविप्रलम्भादन्योन्यवैरागममार्गमूलात् ॥ ५०॥

सौम्यैश्चतुष्केन्द्रगृहोपयातैः कुलोत्तमा वंशकरा नृपालाः ।
सर्वज्ञधीवित्तयशोगुणाढ्या नरा नृपप्रीतिकराश्च वा स्युः ॥ ५१॥

कर्मकर्मांशगाः सौम्या जातः पुण्यरतः सदा ।
पापिनः पापकर्मात्मा चन्द्राद्वा यदि जायते ॥ ५२॥

कर्मराश्यंशपो यत्र तदीशः पापखेचरः ।
भूमादिग्रहसम्बन्धी यदि पापरतो भवेत् ॥ ५३॥

सिद्धारम्भः कर्मगे चन्द्रलग्नाद्भानौ भौमे साहसी पापबुद्धिः ।
विद्वान् सौम्ये वाक्पतौ राजतुल्यः शुक्रे भोगी भानुजे शोकतप्नः ॥ ५४॥

चन्द्रात्कर्मगते रवौ सरुधिरे मत्तः परस्त्रीरतो-
ज्योतिर्विञ्च सचन्द्रजे जलधनस्त्रीपूषणादिप्रियः ।
सिद्धार्थो नृपसंमतश्च सगुरौ शुक्रेण युक्ते नृप-
प्रीतिस्त्रीधनवृद्धिभाक् शनियुते दीनो दरिद्रो भवेत् ॥ ५५॥

चन्द्रात्कर्मणि भूसुते बुधयुते शाश्त्रोपजीवी भवेत्
सेज्ये नीचजनाधिपः सभृगुजे वैदेशिकः स्याद्वणिक् ।
सार्कौ साहसिकोऽसुतश्च शशिनः कर्मस्थिते बोधने
सेज्ये षण्डतनुश्च दीनवष्टनः ख्यातो नृपाल्प्रियः ॥ ५६॥

मान्दे चन्द्रमओ बुधे सभृगुजे विड्यावधूवित्तवान्
सार्कौ पुस्तफलैस्वकश्च विषमाचारप्रवृत्तोऽधवा ।
जीवे शुक्रयुते तु विप्रजनपो भूपप्रियः पण्डितः
सार्कौ सर्वजनोपतापचतुरो जातः स्थिरारम्भधीः ॥ ५७॥

सुगन्धनीलचूर्णादिचित्रकारो भिषग्वणिक् ।
कर्मस्थानगते मन्दे सासुरेज्ये निशाकरात् ॥ ५८॥

अथ आज्ञविचारः ।

आज्ञास्थानाधिपे सौम्ये शुभयुक्तेक्षितेऽपि वा ।
शोभनांशगते वाऽपि जातस्त्वाज्ञधरो भवेत् ॥ ५९॥

आज्ञाधिपे मन्दयुते रन्ध्रनाथेन वीक्षिते ।
क्रूरांशे केन्द्रराशौ वा क्रराज्ञां प्रकरोति सः ॥ ६०॥

अथ किर्तिं-मान-कृषि-व्यापार-निद्राविचारः ।

कर्कटस्थे निशानाथे गुरुशुक्रनिरीक्षिते ।
पारावतादिभागस्थे सत्कीर्तिधनवान् भवेत् ॥ ६१॥

मानेशे शुभसंयुक्ते शुभमध्यगतेऽपि वा ।
शुभग्रहांशके वाऽपि कीर्तिमानभिमानवान् ॥ ६२॥

पापेक्षिते कर्मणि पापयुक्ते मानाधिपे हीनबलोपयाते ।
जातोऽपवदी विगताभिमानः स्वकर्मतेजोबलकीर्तिहीनः ॥ ६३॥

कर्मेशतग्नवांशेसौ सनिसम्बन्धसंयुतौ ।
षष्ठाधिपयुतौ दृष्तौ बहुदारान्वितो भवेत् ॥ ६४॥

भूसूनुक्षिदिदिटिराशिपौ च बलिनौ केन्द्रत्रिकोणायगौ
कर्मेशे भृउचन्द्रविक्षितयुते कृष्यादिगोवित्तवान् ।
सम्बन्धी यदि कर्मणीः शशिसुतो वाणिज्यशीलः सदा
सौम्यासौम्ययुते तु सात्त्विकतमोनिद्री विमिश्रेऽन्यथा ॥ ६५॥

अथ लाभभावफलम् ।

लाभस्थनेन लग्नादस्वि(खि)लधनचयङ्सिमिच्छन्ति सर्वे
लाभस्थानोपयातः सकलबलयुतः खेचरो वित्तदः स्यात् ।
भानुश्चेज्ज्ञातिवर्गादतिघनमुडुपो मातृवर्गेण भौमः
स्वोत्थाच्चान्द्रिर्यदीष्टप्रभुविबुधसुहृन्मातुलैर्वित्तमेति ॥ ६६॥

जीवो यच्छति वेदशास्त्रयजनाचारादिपुत्रैर्द्धनं
शुक्रः स्त्रीजनकाच्यनाटककलासङ्गितविद्यादिभिः ।
दासीदासकृयाजितधनं धन्यं समृद्धि शनि-
र्विग्नादिद्युचरेण वीक्षितयुते विप्रादयो वित्तदाः ॥ ६७॥

आयस्थः शुभखेचरः शुभधनं पापस्तु पापार्जितं
मित्रैश्रमिश्रधनं समेति भनुजस्तज्जातकोक्तं वदेत् ।
लाभस्थानगतः समस्तगुणवानिष्टाधिकश्चेद्बली
जातो यानविभूषणाम्बरवधूभोगादिविद्याधिकः ॥ ६८॥

वित्तेशायगृहाधिपौ तनुपतेरिष्टग्रहौ चेद्धनं
सत्कर्मामराविप्रपुण्यविषये दानादियोग्यं वदेत् ।
आयस्थो विबलः परार्जतबलो नीचारिदुःस्थानपो
रेकायोगकरो यदि प्रतिदिनं कुर्वीत भिक्षाटनम् ॥ ६९॥

लाभेशे दिनपेऽथवा शशधरे भूपालतुल्याश्रयाद्
भौमे मन्त्रिजनग्रजानुककृषिद्वारैर्धनं लभ्यते ।
विद्याबन्धुसुतैः सुधाकरसुते जीवे निजाचारतः
शुक्रे रत्नवधूगजादिपशुभिर्मन्दे कुवृत्त्या श्रियम् ॥ ७०॥

लाभस्थानपतौ विलग्नभवनात् केन्द्रत्रिकोणस्थिते
लाभे पापसमन्विते तु धनवान् तुङ्गादिराश्यंशके ।
तत्तत्कारकवर्गतो बलवशाद् योगानुसारं वदेत्
तत्तत्खेटदशापहारामये वित्तं वदेत्तद्दिशि ॥ ७१॥

इति लाभभावविचारः ।

अथ व्ययभवाफलम् ।

क्रूरग्रहे बलवति व्ययगेऽरिनाशस्थानाधिपे कृषिधनस्थितिनाशकः स्यात् ।
रिष्फे चतुर्द्विपदभे सह तत्पदेन खेटेन सर्वपशुभृत्यविनाशमेति ॥ ७५॥

विप्रादिखेचरयुते सति विप्रमुख्यैः स्त्रीवर्गतस्तु तरुणिस्वचरेण युक्ते ।
रिष्फे नरग्रहयुते रिपुणा सुहृद्भे जातः सुहृज्जनवशाद्धननाशमेति ॥ ७६॥

अथ दानविचारः ।
त्यागी शुभग्रहयुते कृषकश्च धर्मी पापेऽवसानगृहगे तु विवादशीलः ।
नेत्रामयः पवनकृच्चपलोऽटनः स्यादुच्चस्वमित्रभवने तु परोपकारी ॥ ७७॥

भानुर्वा कृशशीतगुर्व्ययगतो वित्तस्य नाशं नृपै-
र्भौमो नाशयतीन्दुजेक्षितयुतो नानाप्रकारिर्द्धनम् ।
वागीशेन्दुसिता यदि व्ययगता वित्तस्य संरक्षकाः
सौम्यः शुक्रयुतेक्षितो यदि नृणां शव्यासुखं जायते ॥ ७८॥

अथ शयनविचारः ।

व्ययेशे स्वोच्चराशिस्थे शुभवर्गसमन्विते ।
शुभखेचरसंदृष्टे पर्यङ्कशयनं वदेत् ॥ ७९॥

विचिन्नमज़्न्चे शयनं व्ययेशे परमोच्चगे ।
भाग्यनाथेन वा दृष्टे मणिरत्नविभूषितम् ॥ ८०॥

शुक्रे वा रविनन्दने हिमकरे रन्ध्रत्रिकोणस्थिते
तद्देहे शिथिलीभवेन्नृपतनं जातस्य केत्वन्विते ॥ ८१॥

अथ गतिधिचारः ।

मन्दाहिध्वजसंयुते तु निधनस्थानाधिपेनान्विते
रिष्फे दुर्गतिमेति षष्ठपतिना दृष्टेऽथवा मानवः ।
जातो याति परं पदं सुरगुरौ लग्ने भृगौ कामगे
कन्यस्थे रजनीकरे यदि धनुर्लग्ने च मेषांशके ॥ ८२॥

दुस्थे दुष्तगृहाधिपे बलयुते तद्भावपुष्टीं वदे-
दायुःस्यानपतौ तु यत्र विषले तद्भावनाशं तथा ।
लग्नेषः शुभखेटवीक्षितयुतो यद्भावयातो वल्ली
तद्भावस्य शुभं करोति विपुलं नीचारिगस्त्वन्यथां ॥ ८३॥

इति श्रिनवग्रहकृपवा वैद्यनाथविरचिते जातकपारिजातेपञ्चदशो।आध्यायः ॥ १५॥

अथ स्त्रीजातकाध्यायः ॥ १६॥

स्त्रीबलारोग्यसन्तानविद्याकीतिविवर्द्धनम् ।
तिथिमग्रहसंयुक्तं जातकं ब्रमहे वयम् ॥ १॥

अर्थार्जने सहायः पुरुषाणमापदर्णवे पोतः ।
यात्राकाले मन्त्री जातकमपहाय नास्यपरः ॥ २॥

श्रीमज्जातलपत्रिका परहितं व्योमाधिवासस्फुटैः
पङ्चाङ्गद्युचराष्टवर्गसहितस्थानादिषड्वीर्यजैः ।
आयुर्गोचरयोगभावजफलैः सार्द्धं दशाचक्रज्ञै-
र्दीर्घायुःसुतभर्तृसौख्यविपुलश्रीकीर्तिदा लिख्यते ॥ ३॥

स्त्रीणां जन्मफलं नृयोगमुदितं यत्तत्पतौ योजयेत्-
तासां देहशुभाशुभं हिमकराल्लग्नाच्च वीर्याधिकात् ।
भर्तृईणामगुणं गुणं मदगृहाच्छिद्राच्च तेषां मृतिम्
सौम्यासौम्यबलाबलेन सकलं सङ्चिन्त्य सर्वं वदेत् ॥ ४॥

स्त्रीणां जन्मनि लग्नशीतकरयोर्मध्ये बली यस्ततः

सम्पद्रूपबलानि तन्नवमतः पुत्रायवृद्धिं वदेत् ।
सौमङ्गल्यप्रनिष्टमष्टमगृहाद् भर्तृश्रियं सप्तमात्
केचिद्भर्तृशुभाशुभं शुभगृहादिच्छन्ति होराविदः ॥ ५॥

वैधव्यं निधनेन लग्नभवनात्तेजो यशः सम्पदः
पुत्रं पङ्चमभावतः पतिसुखं कामेन केचिद्विदुः ।
प्रव्रज्यामपि योषितामतिसुखं धर्मोपयातग्रहैः
शेषं भावजयोगजन्यमखिलं नारीनराणां समम् ॥ ६॥

यमे लग्ननिशाकरौ यदि वरस्त्री रूपशिलान्विता
सौम्यालोकितसंयुतौ गुणवती साध्वी च सम्पद्युता ।
ओजर्क्षे पुरुषाकृतिश्च चपला पुंश्चेष्टित पापिनी
पापव्योमचरेण वीक्षितयुतौ जाता दुराचारिणी ॥ ७॥

लग्नेन्दू विपमर्क्षगौ शुभयुतौ सौम्यग्रहालोकितौ
नारी मिश्रगुणाकृतिः स्थितिगतिप्रक्षावती जायते ।
युग्मागारगतौ तु पापसहितौ पापेक्षितौ वा तथा
तद्राशीशयुतेक्षकग्रहबलादाहुः समस्तं विदः ॥ ८॥

ओजे विलग्ने पुरुषैर्बलिष्ठैर्बलान्वितैश्चन्द्रबुधासुरेज्यैः ।
सामान्यशक्तौ सति सूर्यपुत्रे जाता हि तस्था बहवो धवाः स्युः ॥ ९॥

युग्मे विलग्ने कुजसौम्यजीवशुक्रैर्बकिष्ठैः खलु जातकन्या ।
विख्यातनाम्नी सकलार्थतत्त्वबुद्धिप्रसिद्धा भवतीह साध्वी ॥ १०॥

सौरे मध्यबले बलेन अहितैः शीतांशुशुक्रेन्दुजैः
शेषैर्वीर्यसमन्वितैः पुरुषीणी यद्योजराश्युद्रमे ।
जीवारास्फुजिदैन्दवेषु बलिषु प्राग्लग्नराशौ समे
विख्याताखिलशास्त्रयुक्तिकुशला स्त्री ब्रह्मवादिन्यपि ॥ ११॥

अथ त्रिंशामशफलम् ।

लग्ने भौमगृहं गते शशिनि वा वीर्याधिके भूसुते
त्रिंशांशप्रभवाऽबला यदि दुराचारप्रयुक्ता भवेत् ।
प्रेष्या भानुसुतांशके गुणवती साध्वी च जीवांशके
सौम्यांशे मलिना सितांशजवधूर्जारव्रताचारिणी ॥ १२॥

लग्ने भार्गवराशिगे कलहकृद् दुष्टा कुजस्यांशके

साध्वी पुत्रवती पुरन्दरगुरोरंशे पुनर्भूः शनेः ।
सौम्यस्यांशसमुद्भवाऽखिलकलासङ्गीतवाद्यप्रिया
शुक्रांशे बुधवल्लभा च सुभगा लोकप्रिया जायते ॥ १३॥

त्रिंशांशेऽवनिजस्य बोधनगृहे लग्ने तु पुत्रान्विता
मन्दांशे विधवाऽथवा मृतसुता क्लीबाकृतिस्थाऽसनी ।
जैवे भर्तृपरा बुधस्य तरुणी विख्याततेजस्विनी
शौक्रे चारुतराम्बराभरणगोवित्तप्रसिद्धा भवेत् ॥ १४॥

लग्ने चन्द्रगृहं गते बलवति क्षोणिसुतस्यांशके
जाता जारविनोदशीलरसिका पापेक्षिते शीतगौ ।
विश्वस्ता रवीजस्य निर्जजरगुरोरल्पायुरल्पात्मजा
बौधे शिल्पकलावती भृगुसुतत्रिंशांशके कामुकी ॥ १५॥

भानुक्षेत्रगते तनौ शशिनि वा भूनन्दनस्यांशके
नारी पुम्प्रकृतिस्थिता च कुलटा मन्दांशके दुःखिता ।
जीवांशे नृपवल्लभा गुणवती सौम्यस्य पुंश्चेष्टिता
दुष्टा चासुरवन्दितस्य कुपतिस्नेहान्विता रोगिणी ॥ १६॥

वागीशस्य गृहोदये वसुमतीपुत्रस्य भागोद्भवा
विख्याता परिवारिणी रविसुतस्यांशे दरिद्रा भवेत् ।
जीवांशे धनवस्त्रभूषणवती सौम्यस्य सम्पूजिता
साध्वी दानवमन्त्रिणः सुतवती सद्वस्त्रभूषान्विता ॥ १७॥

लग्ने मन्दगृहे बलिन्यवनिजत्रिंशांशके शोकिनी
मन्दांशे सति दुर्भगा निजकुलाचारानुरक्ता गुरोः ।
सर्वज्ञा कुलटा बुधांशजनिता शुक्रस्य बन्ध्या सती
लग्नेन्दुस्फुटयोगतस्तु सकलत्रिंशांशजं वा वदेत् ॥ १८॥

आग्नेयैर्विधवाऽस्तराशिसहितैर्मिश्रैः पुनर्भूर्भवेत्
क्रूरे हीनबलेऽस्तगे स्वपतिना सौम्येक्षिते प्रोज्भिता ।
अन्योन्यांशकयोः सितावनिजयोरन्यप्रसक्ताङ्गना
यूने वा यदि शीतरश्मिसहिते भर्तुस्तदाऽनुज्ञया ॥ १९॥

स्वैरिणी चा पति स्यक्त्वा सर्वणं कामतः श्रयेत् ।
अक्षतं च प्रजाद्वारं पुनर्भूः संस्कृता पुनः ॥ २०॥

सौरार्क्षे लग्नगे सेन्दुशुक्रे मात्रा सार्द्धं पुंश्चली पापदृष्टे ।

कौजे स्वांशे सौरिणा व्याधियोनिश्चारुश्रोणी वल्लभा सद्ग्रहांशे ॥ २१॥

बलहीनेऽस्तगे पापे सौम्यग्रहनिरीक्षिते ।
पत्या विसृजते नारी नीचारिस्थे च वैरिणी ॥ २२॥

उत्सृष्टा मदनस्थिते दिनकरे शत्रुग्रहालोकिते।
अविश्वस्ताऽवनिजे वधूरमणयोरन्योन्यवैरं तु वा ।
सौम्यासौम्ययुते कलत्रभवने जाता पुनर्भूः शनौ
कामस्थे रिपुवीक्षिते त्वविधवा जाता जरां गच्छति ॥ २३॥

पापर्क्षे मदनस्थिते शनियुते वैधव्यमेत्यङ्गना
जारासक्तविलासिनी सितकुजावन्योन्यराश्यंशगौ ।
चन्द्रे कामगृहं गते तु पतिना सार्द्धं दुराचारिणी
मन्दारर्क्षविलग्नौ शशिसितौ बन्ध्या सुतस्थे खले ॥ २४॥

कलत्रराश्यांशगते महीजे मन्देक्षिते दुर्भगमेति कन्या ।
कलत्रांशके सौम्यदृशा समेते कलत्रराशौ पतिवल्लभा स्यात् ॥ २५॥

भौमागारविलग्नगौ शशिसितौ नारी पतिद्वेषिणी
चन्द्रज्ञौ परतत्त्ववादचतुरा भौमेन्दुजौ भोगिनी ।
चन्द्रज्ञासुरवन्दिता यदि सुखद्रव्यान्विता लग्नगा
वागीशो यदि लग्नगः सुतनया प्रज्ञाविभूषान्विता ॥ २६॥

तुङ्गथा गगनाटनाः शुभकरा रन्ध्रे सपापे वधू-
र्वैधव्यं समुपैति पापभवने पापग्रहालोकिते ।
रन्ध्रेशांशपतौ खले च विधवा निसंशयो भामिनी
सौम्यै रन्ध्रगतैः समेति तरुणी प्रागेव मृत्यु पतेः ॥ २७॥

भग्यास्थाः शुभखेचराः स्मरगते पापेऽष्टमस्थेऽथवा
भर्तृश्रीबहुपुत्रसौख्यविभवैः सार्द्ध चिरं जीवति ।
क्रूरैर्बन्धुगृहोपगैर्बहुसुतप्राप्ता भवत्यङ्गना
चापे वा कटकोदये पतिसुतप्राप्ता दरिद्रान्विता ॥ २८॥

गोसिंहालिवधूदये सुतगते चन्द्रेऽल्पपुत्रान्विता
पापिरस्तशुभोदयाष्टमगतैर्दारिद्रयशोकाकुला ।
सौम्यासौम्ययुतैश्च मिश्रफलिनी सौम्यैः शुभश्रीयुता
पुत्रेशेऽरिगते लग्नौ रिपुपतौ शस्त्रेण मृत्युर्भवेत् ॥ २९॥

करग्रहैरस्तगतैः समस्तैर्विलग्नराशेर्विधवा भवेत्सा ।
मिश्रैः पुनर्भूरिह जातकन्या पत्युज्भिता हीनबलैरसद्भिः ॥ ३०॥

स्त्रीजन्मलग्नान्मदगे शशाङ्के शुक्रारयुक्ते यदि जातकन्या ।
सा पत्यनुज्ञापरगामिनी स्यात्सौरारभांशोपगते तथैव ॥ ३१॥

सौरारभांशोपगतग्रहेषु शुक्रेन्दुयुक्तेश्वशुभेक्षितेषु ।
जाता कुलाचारगुणैर्विहीना मात्रा च साकं व्यभिचारिणी स्यात् ॥ ३२॥

क्षितितनयनवांशे लग्नतः सप्तमस्थे दिनकरबुधदृईष्टे व्याधियोनिः प्रजाता ।
शुभकरनवभागे सप्तमस्थानसंस्थे सुभगसुतवती सा चान्यथा दुर्भगा स्यात् ॥ ३३॥

कामासक्तमनस्विनी च विधवा पापद्वये सप्तमे
पश्चार्खामिवधं करोति कुलटा पापत्रये चास्तगे ।
राजामात्यवराङ्गना यदि शुभे कामं गते कन्यका
मारस्थे तु शुभत्रये गुणवती राज्ञी भवेद् भूपतेः ॥ ३४॥

अन्योन्यांशगतौ सितार्कतनयावन्योन्यदृईष्टौ तु वा
कुम्भे चाष्टमभागजातवनिता कामाग्नितप्ता भवेत् ।

वैधव्यं समुपैति चन्द्रभवनात् क्रूरे मदस्थानगे
चन्द्रादस्तगृहोपगः शुभकरो राज्यापदं यच्छति ॥ ३५॥

स्त्रीजन्मलग्ने शशिशुक्रयुक्ते कोपान्विता सा सुखभागिनी स्यात् ।
सर्वत्र चन्द्रे सति तत्र जाता सुखान्विता वीतरतिप्रिया स्यात् ॥ ३६॥

शुक्रेन्दुभे रूपगुणाभिरामा कलावती जीवबुधोदये तु ।
लग्नस्थिता जीवबुधासुरेज्या जाताङ्गना सर्वगुणप्रसिद्धा ॥ ३७॥

वाचस्पतौ नवमपञ्चमकेन्द्रसंस्थे तुङ्गादिके भवति शीलसमन्विता च ।
साध्वी सुपुत्रजननी सुखिनी गुणाढ्यां नूनं कुलद्वययशत्करिणी भवेत्सा ॥ ३८॥

यदि शुभकरदृष्टा शिल्पिनी शुद्धचित्ता सततमिह सलज्जा चारुमूर्तिः सुपुत्रा ।
बहुधनशुभयुक्ता वल्लभे व्रजति शुभशतानां भाजनत्वं च होरा ॥ ३९॥

चन्द्रे कर्कटकोदये च बलिभिः शुक्रज्ञजीवेन्दुभि-
र्नानाशास्त्रकलारसज्ञचतुरा विख्याततेजखिनी ।
कामस्थैरथवा विलग्नभवनाद्धर्मस्थितैः खेचरैः

प्रव्रज्याभ्युपयाति जन्मसमये पाणिग्रहे चिन्तयेत् ॥ ४०॥

पापेऽस्ते नवमगतग्रहस्य तुल्यां प्रव्रज्यां युवतिरुपैत्यसंशयेन ।
उद्वाहे वरणविधौ प्रदानकाले चिन्तायामपि सकलं विधेयमेतन् ॥ ४१॥

जन्मन्युद्वाहकाले च चिन्तायां वरणे तथा ।
स्त्रीणां चिन्ता बुधेनोक्ता घटते तत्पतिष्वपि ॥ ४२॥

क्रूरेऽष्टमे विधवता निधनेश्वरांशे यस्य स्थिते वयसि तस्य समे प्रदिष्टा ।
सत्स्वर्थगेषु मरणं स्वयमेव तस्याः कन्यालिगोहरिषु चाल्पसुतत्वमिन्दौ ॥ ४३॥

रन्ध्रे मिश्रबले शुभाशुभखगैरालोकिते वा युते
दम्पत्यो समकालमृत्युमखिलज्योतिर्विदः संविदुः ।
एकस्थौ मदलग्नपौ यदि वा लग्नस्थिते कामपे
कामस्थे तनुपे शुभग्रहयुते मृत्युस्तयेस्तुल्यतः ॥ ४४॥

सत्स्वर्थगेषु स्वयमेव सा स्त्री विपद्यते तत्परिपाककाले ।
रन्ध्रस्थतन्नाथतदंशपानां दशापहारे मृतिमाहुरार्याः ॥ ४५॥

सहजभवननाथे पुङ्ग्रहे पुङ्ग्रहर्क्षे पुरुषस्वचरयुक्ते पुङ्ग्रहालोकिते वा ।
नय्नभवनकेन्द्रे कोणगे वा बलिष्टे बहुधनसुखवन्तं सोद्रं याति जाता ॥ ४६॥

सहोदरस्थानपलाभनाथौ विलग्नतः पङ्चमराशियातौ ।
नृपालतेजोगुणरूपवन्तं सहोदरं जातवधूः समेति ॥ ४७॥

अथ् पतिलक्षणम् ।

यस्या मन्मथमन्दिरे गतबले शून्ये खलालोकिते
सौम्यव्योमनिवासदृष्टिरहिते भर्ता नरः को भवेत् ।
क्लीबः स्यान् पतिरस्तगे शशिसुते सार्कात्मजे दुर्भगा
बन्ध्या वा तरुणी चरे मदगृहे नित्यं प्रवासान्वितः ॥ ४८॥

स्वांशे भास्वति कामगे मृदुरतिक्रीडाविनोदी पति-
श्चन्द्रे सौख्यमुपैति भूमितनये जारे वधूतत्परः ।
विद्वान् चन्द्रसुते जितेन्द्रियवरो जीवे मदस्थानगे
शुक्रे कान्तवपुः सुखी च रविजे वृद्धोऽतिमूर्खो भवेत् ॥ ४९॥

स्थान्मार्दवाङ्गो गुणवान्प्रगल्भो जामित्रराश्यंशकजा तु थाऽस्याः ।

सौरेऽस्तगे स्वांशगृहोपयाते वृद्धोऽतिमूर्खः पतिरेव तस्याः ॥ ५०॥

दुःस्थौ धर्मगृहेशदेशदेसचिवौ भर्ता गतायुर्भवेद्
दीर्घायुर्धनवांस्त्रिकोणगृहगौ केन्द्रस्थितौ वा यदि ।
विद्वान् बोधनवाहनेशसहितौ सारार्कजौ कर्षकः
स्वर्भानुध्वजसंयुतौ यदि खलः सारीश्ररश्चोरराट् ॥ ५१॥

गौराङ्गः पतिरस्तगे दिनकरे कामी सरोषेक्षण-
श्चन्द्रे रूपगुणान्वितः कृशतनुर्भोगी रुगार्तो भवेत् ।
नम्रः क्रूररसोऽलसः पटुवचाः संरक्तकान्तिः कुजे
विद्यावित्तगुणप्रपञ्चरैकः सौम्ये मदस्थानगे ॥ ५२॥

दीर्घायुर्नृपतुल्यवित्तविभवः कामी च बाल्ये गुरौ
कान्तो नित्यविनोदकेलिचतुरः काव्ये कविः श्मापतिः ।
मन्दे वृद्धकलेवरोऽस्थिरतनुः पापी पतिः कामगे
राहौ वा शिखिनि स्थिते मलिनधीर्नीचोऽथवा तत्समः ॥ ५३॥

दिग्देशस्थितिधर्मकर्मजगुणाः पङ्चातके योषितां
ये नारीजनजातके निजपतौ संयोजितास्तत्वतः ।
द्युणांशोपगतग्रहेषु बलवत्खेटांशतुल्याः सुताः
केन्द्रे कामपतिः करोति विपुलं कल्याणकालोत्सवम् ॥ ५४॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते षोडशोऽध्यायः ॥ १६॥

## अथ कालचक्रदशाध्यायः ॥ १७॥

प्रणम्य परमात्मानं शिवं परमकारणम् ।
खेचरं चक्रमध्यस्थं चतुःषष्टिकलात्मकम् ॥ १॥

पप्रच्छ देवदेवेशमीश्वरं सर्वमङ्गला ।
कालचक्रगतिं सर्वां विस्तराद्वद मे प्रभो ॥ २॥

इश्वर उवाच ।

अहमादित्यरूपोऽस्मि चन्द्रमास्त्वं प्रचक्षसे ।
संयोगेन वियोगेन जगत्स्थावरजङ्गमम् ॥ ३॥

पङ्च प्राचीरालिखेद्बाणसङ्गयास्तिर्यग्नेखा वर्जतान्तश्चतुष्काः ।
प्रागादीशा द्वादश व्योमवासा ज्योतिश्चक्रस्वामिनस्तूबराद्याः ॥ ४॥

धराजशुक्रज्ञशशीनसौम्यसितारजीवार्कजमन्दजीवाः ।
क्रमेण मेषादिकराशिनाथास्तदंशपाश्चेति वदन्ति सन्तः ॥ ५॥

भूतैकविंशद्रिरयो नवदिक्षोडशाब्धयः ।
सूर्यादीनां क्रमादब्दा राशीनां स्वामिनो वशात् ॥ ६॥

अश्वीपुनर्वसूहस्तमूलप्रोष्ठपदादिषु ।
अंशकान् गणयेन्मेषात्प्रादक्षिण्यक्रमं वदेत् ॥ ७॥

रोहिणीमघवैशाखवैष्णवादिषु भेषु च ।
अंशकान् वृश्चिकादीनां गणयेदपसव्यतः ॥ ८॥

दक्षिणाभिकनक्षत्रं द्वादशांशकराशिषु ।
चक्रं प्रदक्षिणिकृत्य मीनान्ते विन्यसेत्पुनः ॥ ९॥

उत्तरात्रयनक्षत्रं वृश्चिकाद्यप्रदक्षिणम् ।
कृत्वा चापान्तकेऽन्यस्मिज्ज्ञातव्ये दक्षिणोत्तरे ॥ १०॥

सव्यापसव्यमार्गेण चाश्विन्यादि त्रिकं त्रिकम् ।
देहादि गणयेत्सव्ये वामे जीवादि गण्यते ॥ ११॥

मेषगोयमकुलीरमन्दीरेष्वंशकेषु परमायुच्यते ।
ज्ञानकं मदगजास्तदा क्रमात्तत्र कोणभवनेषु तद्वदेत् ॥ १२॥

एवमायुः परिज्ञानं देहजीवौ प्रकल्प्य च ।
सव्ये तु प्रथमांशस्तु देह इत्यभिधीयते ॥ १३॥

जीवः सर्वेष्वन्त्यपादौ विलोममपसव्यके ।
देहजीवे यदा राहुः केतुभौमो रविः स्थितः ॥ १४॥

तदा तस्मिन्भवेन्मृत्यु रोगः प्रवर्तते ।
देहजीवगृहं यातः सौम्यो जीवश्च भार्गवः ॥ १५॥

सुखसम्पत्करं सर्वं शोकरोगविनाशनम् ।

मिश्रखेचरसंयुक्ते मिश्रं फलमवाप्नुयात् ॥ १६॥

सिंहावलोकसमये मण्डुकगतिसम्भवे ।
अपमृत्युभयं तस्मिन् प्रायश्चित्ताद्विमुच्यते ॥ १७॥

मीनात्त वृश्चिके यते ज्वरं भवति देहिनाम् ।
पाथोनात्कर्कटे याते मातृबन्धुवधूमृतिः ॥ १८॥

कर्कटात्तु हरौ याते व्रणरोगं वदेद् बुधः ।
सिंहात्तु मिथुनं याते स्वस्त्रीव्याधिर्मृतिर्भवेत् ॥ १९॥

पुत्रबन्धुमृं विद्याच्चापान्मेषं गते पुनः ।
शुभग्रहेऽस्तिमन्नभयं पापग्रहयुते भयम् ॥ २०॥

कन्यायाः कर्कटे याते पूर्वभागे महान्भवेत् ।
उत्तरां दिशमाश्रित्य शुभयात्रां गमिष्यति ॥ २१॥

सिंहात्तु मिथुनं याते पूर्वभागं विवर्जयेत् ।
कार्यारम्भे तु नैर्कृत्यां सुखयात्रां गमिष्यति ॥ २२॥

कर्कटादक्षिणे सिंहे कार्यहानिश्च रोगकृत् ।
दक्षिणां दिशमाश्रित्य पञ्चदागमनं भवेत् ॥ २३॥

मीनास्तुवृश्चिके क्रान्ते उदग्गच्छति सङ्कटम् ।
चापान्मेषे भयं यात्रा व्याधिर्बन्धुमृतिर्भवेत् ॥ २४॥

तत्र सम्पद्विवाहादि शुभं भवति पश्चिमे ।
शुभारूढे नृपप्रीतिं सर्वसम्पत्करं नृणाम् ॥ २५॥

देहो मेषश्चापसिंहाजभानां जीवश्चापी गोवधूनक्रमानाम् ।
आकोकेरो देहसंज्ञो नृयुग्मम् जीवः सव्ये चापसव्ये विलोमात् ॥ २६॥

उक्षा देहो युग्मकोणं गतानां जीवं युग्मागारमाहुर्मुनीन्द्राः ।
मीनो जीवः कर्कटो देहराशिः सव्ये चक्रे कर्किकीतान्त्यभानाम् ॥ २७॥

देहजीवसमायुक्तैर्भौमार्किरविभोगिभिः ।
एकैकयोगे मरणं बहुयोगे न संशयः ॥ २८॥

देहयुक्ते महारोगं जीवयुक्ते महद्भयम् ।
द्वाम्यां संयोगमात्रेण इन्यते नात्र संशयः ॥ २९॥

अदिरोगो भवेद् द्वाम्यामपमृत्युस्त्रिभिर्भवेत् ।
चतुर्भिर्मृतिरापन्ना देहजीवे भवेद्यदि ॥ ३०॥

युगपदेहजीवौ तु पापग्रहयुतौ तथा ।
राजचोरादिभीतिश्च द्वाभ्यां मृत्युर्न संशयः ॥ ३१॥

अग्निबाधां रवौ विद्याच्चन्द्रे ज्वलनबाधनम्
भौमे शस्त्रकृता पीडा वायुबाधाकरं बुधे ॥ ३२॥

गुरौ चोदरबाघा स्यात् शुक्रेऽग्निभयमाप्नुयात् ।
शनौ गुल्मेन बाधा स्याद् राहौ विषकृतां रुजम् ॥ ३३॥

भ्रातृस्थानगतो जीवो दारस्थानगतः कुजः ।
तथा जन्मगतो मन्दो राहुर्नवमराशिगः ॥ ३४॥

चन्द्रोऽष्टमगृहं यातः सूर्यो रिष्फगृहं गतः ।
बुधः सप्तमभावस्थो भार्गवः शत्रुराशिगः ॥ ३५॥

इत्येवं मरणस्थानं तस्मिन्पापयुतेऽथवा ।
पापदृष्टेऽरिनीचस्थे दुर्बले दुःखमाप्नुयात् ॥ ३६॥

अथ देहजीवफलम् ।

भानुः करोति विविधापदमर्थनाशमातिज्वरारिजनभीतिपदच्युतिं च ।
पित्तारिगुल्मग्रहणीक्षयकर्णरोगं पश्चादिबन्धुमरणं सहजादिनाशम् ॥ ३७॥

इति सूर्यफलम् ।

चन्द्रः स्वबन्धुनजसङ्गमकन्यकाप्तिमारोग्यभूषणसुखाम्बरराजपूज्यम् ।
दानक्रियादिसुरभूसुरपुण्यतीर्थस्नानार्चनं मृदुसुखान्नसुखं करोति ॥ ३८॥

इति चन्द्रफलम् ।

भौमः करोति तनुतापरुगग्निचोरभीतिं स्वबन्धुकलं सहजादिनाशम् ।
क्षेत्रार्थनाशपदविच्युतियुद्धनीतिं गुल्मार्शकुष्ठविषशत्रुभयं कुवृत्तिम् ॥ ३९॥

स्वरमासुरिकापैत्त्यं ग्रन्थिस्फोटं कुजस्य च ।
विषाग्निनशस्त्रचोरारिनृपभीतिं वदेद् बुधः ॥ ४०॥

इति भौमफलम् ।

सौम्यः करोति सुहृदासमहत्प्रसादविज्ञानशीलनिगमागमशास्त्रबोघम् ।
स्त्रीपुत्रदारनृपभूषणगोगजाश्वलाभं विवेकधनबुद्धियशोऽभिवृद्धिम् ॥ ४१॥

इति बुधफलम् ।

जीवः विविधार्थसुखं महत्त्वं राज्याभिषेकमवनिप्रभुपूजनाद्यम् ।
स्त्रीपुत्रलाभसुखभूषणभोजनार्थमारोग्यकीर्तिविजयं च परोपकारम् ॥ ४२॥

इति गुरुफलम् ।

शुक्रः करोति रतिलाभसुखाङ्गनादिचित्राम्बरार्थपशुवाहनरत्नजालम् ।
गानक्रियानटनगोष्ठिमहत्प्रतापं सत्कीर्तिदानविभवं सुजनैः समाजम् ॥ ४३॥

इति शुक्रफलम् ।

मन्दः करोति कलहं तनुकृच्छ्नमृत्युबन्ध्वातिमग्निरिपुभूतभयं विघातिम् ।
मानार्थहानिमभिमानकलत्रपुत्रनाशं गृहार्थकृषिवाणिजगोविनाशम् ॥ ४४॥

इति शशिफलम् ।

राहौ देहेऽरिपीडाऽत्मबन्धुकष्टपरिभ्रमम् ।
पक्षाघातादिपीडां च राजभीतिं वदेन्नृणाम् ॥ ४५॥

इति राहुफलम् ।

केतौ चोराग्निपीडादिरक्तस्त्रावादिपीडनम् ।
दारिद्रयं बन्धुनाशं च स्थाननाशं धनक्षयम् ॥ ४६॥

इति केतुफलम् ।

अथ चक्रदशाफलम् ।

लग्नचक्रदशाकाले देहारोग्यं महत्सुखम् ।
कीतिभूषणराज्यार्थसुतदाराम्बरायतिम् ॥ ४७॥

शुभक्षेत्रे शुभं सर्वं पापर्क्षे फलमन्यथा ।
तद्वत्पापसमायुक्ते शुभयुक्ते शुभादिकम् ॥ ४८॥

स्वक्षेत्रतुङ्गमित्रस्थखेचरेण सम्न्विते ।
विलग्नचक्रपाके तु राज्यार्थनृपपूजनम् ॥ ४९॥

नीचमूढारिराशिस्थखेचरेण समन्विते ।
पुत्रदारादिनाशं च मिश्रे मिश्रफलं वदेत् ॥ ५०॥

इति लग्नफलम् ।

द्वितीयराशिचक्रे तु धनधान्यविवर्धनम् ।
भोजनं सुतदाराप्तिं क्षेत्रगोनृपपूजनम् ॥ ५१॥

विद्याप्तिं वक्पटुत्वं च सद्गोष्ठया कालयापनम् ।
शुभर्क्षे फलमेवं स्यात्पापर्क्षे फलमन्यथा ॥ ५२॥

इति द्वितीयफलम् ।

तृतीयराशिचक्रस्य परिपाके महत्सुखम् ।
भक्ष्यभोज्यफलाप्तिं च शौर्यं धैर्य मनोजयम् ॥ ५३॥

कर्णाभणरवस्त्राप्तिं कण्ठभूषणमायतिम् ।
अन्नपानादिसम्पत्तिं शुभराशौ शुभं वदेत् ॥ ५४॥

इति तृतीयफलम् ।

वतुर्थराशिचक्रस्य पाके वाहनभूषणम् ।
सीमाप्ति तीर्थयात्रादिमहज्जननिषेवणम् ॥ ५५॥

चित्तशुद्धिं महोत्साहं स्त्रीसुनाप्तिं कृषिक्रियाम् ।
बन्धुक्षेत्राभिवृद्धिं च गृहलाभं महत्सुखम् ॥ ५६॥

आरोग्यमर्थलाभं च सुगन्धाम्बरभूषणम् ।
शुभर्क्षे शोभनं विद्यात्पापर्क्षे सर्वनाशनम् ॥ ५७॥

इति चतुर्थफलम् ।

सौतिराश्यत्मके चक्रे राज्याप्तिं राजपूजनम् ।
स्त्रीसुताप्तिं महाधैर्यमारोग्यं बन्धुपोषणम् ॥ ५८॥

अग्नदानं यशोलाभमानन्दाब्धिमहोदयम् ।
उपकर्तृत्वमर्थाप्तिं वाहनाम्बरभूषणम् ॥ ५९॥

शुभपापर्क्षजं सर्वं ग्रहयोगादिसम्भवम् ।
पूर्ववद्योजयोत्तत्र चरराशौ वदेद् द्युतिम् ॥ ६०॥

इति सुतफलम् ।

चक्रस्य षष्ठ्राशेस्तु पारिपाकेऽग्निजं भयम् ।
चोरारिविषभूपार्तिस्थाननाशं महद्भयम् ॥ ६१॥

प्रमेहगुल्मपाण्ड्वादिग्रहणिक्षयसम्भवम् ।
अपकीर्तिः कलत्रार्थे सुतबन्धुविनाशनम् ॥ ६२॥

बन्धनानि गरप्राप्तिमृणदारिद्रयपीडनम् ।
पापर्क्षे फलमेवं स्यान्मिश्रं शुभगृहे सति ॥ ६३॥

इति षष्ठफलम् ।

कलत्रराशिचक्रस्य परिपाके करग्रहः ।
स्त्रीसुखं पुत्रलाभं च घतसूपगुडादिकम् ॥ ६४॥

कृषिगोगजभूषाप्तिं राजपूजां महद्यशः ।
शुभराशौ फलं सत्यं शुभखेचरसंयुते ॥ ६५॥

इति सप्तमफलम् ।

मृत्युर्चक्रदशाकाले महद् दुःखं धनक्षयम् ।
स्थाननाशं बन्धुनाशं गुह्योदरनिपीडनम् ॥ ६६॥

दारिद्रयमग्नविद्वेषमन्नाभावमरेर्भयम् ।
पापर्क्षे पापसंयोगे फलमेवं विनिर्दिशेत् ॥ ६७॥

इत्यष्टमफलम् ।

शुभचक्रदशाकाले शोभनं भवति ध्रुवम् ।
पुत्रमित्रकलत्रार्थकृषिगोगृहभूषणम् ॥ ६८॥

सत्कर्मधर्मसंसिद्धिं महज्जनपरिग्रहम् ।
शुभराशौ शुभं सर्वं पापराशौ विपर्ययः ॥ ६९॥

इति नवमफलम् ।

कर्मचक्रदशाकाले राज्याप्तिं नृपपूजनम् ।
सत्कीतिदारपुत्रात्मबन्धुसङ्गं महोत्सवम् ॥ ७०॥

आज्ञाधरत्वमारोग्यं सद्गोष्ठया कालयापनम् ।
सत्कर्मफलमैश्वयर्यं शुभराशौ वदेद् बुधः ॥ ७१॥

इति दशमफलम् ।

लाभचक्रदशाकाले धनाप्त्यारोग्यभूषणम् ।
विचित्रवस्त्वागमनं गृहोपकरणं लभेत् ॥ ७२॥

स्त्रीपुत्रबन्धुसौख्याप्तिमृणद्रव्यायति शुभम् ।
राजप्रिति महत्सङ्गं परवदन्ति शुभोदये ॥ ७३॥

इति लाभफलम् ।

व्ययचक्रदशाकाले देहार्तिं स्वपदच्युतिम् ।
चोराग्निनृपकोपादिबन्धुत्रीनृपपीडनम् ॥ ७४॥

उद्योगभङ्गमालस्यं कृषिगोभूमिनाशनम् ।
दारिद्र्यं कर्मवैकल्यं पापर्क्षे तु न संशयः ॥ ७५॥

इति व्ययफलम् ।

अथ चक्रदशाफलेषु विशेषः ।

लग्नादिद्वादशान्तानां भावानां फलमीदृशम् ।

प्रोक्तमत्र विशेषोऽस्ति विशेषात्कथ्यतेऽधुना ॥ ७६॥

तत्तद्राशीशवीर्येण यथायोग्यं प्रयोजयेत् ।
राशीश्वरे बलयुते स्वोच्चमित्रस्ववर्गके ॥ ७७॥

मित्रान्विते शुभैर्दृष्टे यत्प्रोक्तं तच्छुभं वदेत् ।
बलहीनेऽरिनीचस्थे दिनेशकरपीडिते ॥ ७८॥

षष्ठाष्टम्व्ययस्थाने पापशत्रुनिरीक्षिते ।
तद्राशिपे तु जनने कष्टं राश्युद्भवं फलम् ॥ ७९॥

फलं तद्विगुणं कष्टं शुभं राश्युद्भवं फलम् ।
अधिपस्य बलं हीनं यदि चानर्थमाप्नुयात् ॥ ८०॥

अधिपस्य बलाधिक्यं राश्युद्भवफलं शुभम् ।
यदि चेद् द्विगुणं सौम्यं फलत्येव न संशयः ॥ ८१॥

अधिपे चरराशिस्थे चरराश्यंशकेऽपि वा ।
चररायुद्भवं चक्रं विदेशगमनप्रदम् ॥ ८२॥

यावच्चक्रं तदा ज्ञेयं यद्येकस्मिन् चरे सति ।
विदेशगमनं वाऽपि स्वस्थानाप्तिं विनिर्दिशेत् ॥ ८३॥

संग्याव्याये च यत्प्रोक्तं कर्माजीवे च यत्फलम् ।
फलमाश्रयजं यद्यस्त्गनजन्यं च यत्फलम् ॥ ८४॥

यत्प्रोक्तं राजयोगादौ चान्द्रयोगे च यत्फलम् ।
नाभसादिषु यत्प्रोक्तं शुभपापेक्षणादपि ॥ ८५॥

द्विग्रहादिषु यत्प्रोक्तं ग्रहाणां पूर्वसूरिभिः ।
तद्राशिचक्रकाले तु स्वधिया योगयेद् बुधः ॥ ८६॥

मेषादिराशिचक्रं तु भूभागे न्यस्य दक्षिणम् ।
अल्यादि ह्येत्तरं यश्च तच्चक्रं तत्र निर्दिशेत् ॥ ८७॥

फलं वा विफलं वाऽपि प्रागादिद्युचरादधः ।
राशिदिग्भागतो वाऽपि तदिग्भागे विनिर्दिशेत् ॥ ८८॥

यथोपदेशमार्गेण सर्वेषां फलमीदृशम् ॥ १/२॥

अथ त्रिविधकालचक्रगतिः ।

कालचक्रगतिस्त्रेधा निश्चिता पूर्वसूरिभिः ॥ ८९॥

मण्डूकगमनं चैव पृष्ट्ःअतो गमनं तथा ।
सिंहावलोकनं नाम पुनण्गमनं भवेत् ॥ ९०॥

पृष्ठतो गमनं चैव कर्किकेसरिणोरपि ।
मीनवृश्चिकयोश्चाप्मेषयोः केसरी गतिः ॥ ९१॥

कन्याकर्कटयोः सिंहयुग्मयोर्मण्डुकी गतिः ॥ १/२॥

सिंहावलोकसमये त्वरातिस्थाननाशनम् ॥ ९२॥

बन्धुस्नेहादिनाशं च समानजनपीडनम् ।
जले वा पतनं कूपे पिषशस्त्राग्निजं भयम् ॥ ९३॥

बाहनात्पतनं वाऽपि दशाच्छिद्रान्विते सति ।
क्रूरास्तनीचापचयखेचरस्य दशा यदि ॥ ९४॥

दशाच्छिद्रमिति ज्ञेयं प्रवदन्ति विपश्चितः ॥ १/२॥

मण्डूकगतिसम्भुतसमये मरणं गुरोः ॥ ९५॥

पित्रोर्वा विषशस्त्राग्निज्वरचोराग्निभिभयम् ।
मण्डूकसमये सव्ये समानजनपीडनम् ॥ ९६॥

केसरीयुग्ममण्डूके मातुर्मरणमादिशेत्
मरणं राजभीतिं च सन्निपातमरेर्भयम् ॥ ९७॥

सव्ये सिंहावलोके तु चतुष्पाद्भयमग्निजम् ।
पृष्ठतो गमतो सव्ये धनधान्यपशुक्षयः ॥ ९८॥

पितुर्मरणमास्यं तत्समानेषु वा मृतिः ।
मण्डूकगमने वामे श्रीसुतातिपरिश्रमम् ॥ ९९॥

पापज्वरं मृगाद् भीतिं पदच्युतिमरेर्भयम् ।
सिंहावलोकने वामे स्थानभ्रंशः पितुर्मृतिः ॥ १००॥

पृष्ठतो गमने वाऽपि जलभीतिं पदच्युतिम् ।
पितुर्नाशं नृपक्रोधं दुर्गारण्याटमं वदेत् ॥ १०१॥

अथ कालचक्रदशाप्रकारः ।

दस्रानलादितिभुजङ्गदिनेशभानां पूषासुंराजपदविश्वसमीरणानाम् ।
वाक्यानि सव्यगतिचक्रभवादिकानि चत्वारि सर्वमुनयः प्रवदन्ति तज्ज्ञाः ॥ १०२॥

चित्राहिर्बुध्न्यभरणीपूर्वाषादेन्द्रमन्त्रिणाम् ।
सव्यचक्रान्त्यवाक्यानि चत्वारि क्रमशो विदुः ॥ १०३॥

द्विदैवकमलागारपितृदानववैरिणाम् ।
अप्सव्यस्य चक्रस्य वाक्यं चादिचतुष्टयम् ॥ १०४॥

जलेशमित्रेन्द्रमृगश्रविष्ठाभगार्यमाशङ्करतारकाणाम् ।
अन्त्यानि वाक्यान्यपसव्यजानि चत्वारि चक्रो॥।तनि चाहुः ॥ १०५॥

अथ सव्यचक्रवाक्यानि ।

पौरङ्गावोमातासहोधी ॥ १॥ नक्षत्रदासीचर्वणगः ॥ २॥

रूपोत्रक्षुनिघायरङ्गम् ॥ ३॥ वाणी चस्थन्दधिनक्षत्रम् ॥ ४॥

हंसश्चवशांबरपत्रम् ॥ ५॥ क्षन्नाधीकरगोभीमाच ॥ ६॥

सुदधिनक्षत्रजः सितः ॥ ७॥ वामाङ्गारकोत्रक्षु नधिः ॥ ८॥

अथापसव्यचक्रवाक्यानि ।

धनक्षेत्रपराङ्गमिव ॥ १॥ तासादत्रक्षुर्निधिर्हासा ॥ २॥

चर्मीभोगीरायधनर्क्षम् ॥ ३॥ त्रयोरागीमाभेतासह ॥ ४॥

त्रक्षुनिदिर्हासस्तमेव ॥ ५॥ गिरायुधनक्षत्रपरः ॥ ६॥

गोमावाचीसदात्रिक्षुन्ने ॥ ६॥ धीजः सितोभिवाङ्गारिका ॥ *॥

अथ कालचक्रदशावर्षाणि ।

भूतैकविंशद्रिरयो नवदिक्षोडशाब्धयः ।
सूर्यादीनां क्रमादब्दा राशीनां स्वामिनो वशात् ॥ १०६॥

अथान्तर्दशाप्रकारः ।

दशां दशान्दैः सङ्गण्य सर्वायुः संख्यया हरेत् ।
लब्धमन्तर्दशा ज्ञेया वर्षमासदिनार्दकाः ॥ १०७॥

चक्रेशाब्दा भुक्तिराशीश्वराब्दैर्हत्वा तत्तद्राशिमानायुराप्ताः ।
अब्दा मासा वासरा नाडिकाद्या दुःस्थानेशा दुःखरोगाकरा स्युः ॥ १०८॥

इत्थं महादायदिनं महाब्दैः सङ्गण्य तत्रान्तरदास्तु दाये ।
पुनस्तदा तत् परमायुरब्दहृतं दशास्वन्तरगा दशा स्यात् ॥ १०९॥

विनाडीकृत्य नक्षत्रं स्वैः संवत्सरैः पृथक् ।
दायैः सङ्गण्य सर्वायुराप्तं सूक्ष्मदशाफलम् ॥ ११०॥

ग्रहवत्सरवासरा हृताः परमायुष्यसमाभितध्रुवैः ।
निजवर्षगुणाः स्वपाकदा इति पाकेष्वखिलेषु चिन्तयेत् ॥ १११॥

इति श्रीनवग्रहकृपया वैद्यनाथविरचिते जातकपारिजाते सप्तदशोऽध्यायः ॥ १७॥

अथ दशापहलाध्यायः ॥ १८॥

दशानुसारेण फलं वदन्ति मुनीश्वरा जातशुभाशुभं यत् ।
सारं समुद्रधृत्य तथैव वक्ष्ये भेदं यथाविस्तरतो दशायाम् ॥ १॥

बलानुसारेण यथा हि योगो योगानुसरेण दशाभुपैति ।
दशाफलः सर्वफलं नराणां वर्णानुसरेण यथा विभागः ॥ २॥

अथ विंशोत्तरी महादशा ।

आदित्यचन्द्रकुजराहुसुरेशमन्त्रिमन्दज्ञकेतुभृगुजा नव कृतिकाद्याः ।
तेनो नयः सिनदयातटघन्यसेव्यसेनानरा दिनकरादिदशाब्दसंख्याः ॥ ३॥

अथ दशापतेः शुभाशुभस्वम् ।

आरोहवीर्याधिकभावतुल्यबिन्वाधिकाः कर्मभवोदययाः ।
तुन्गादीवर्गोपगता लभोगाः षड्वीर्यवन्तश्च शुभप्रदाः स्युः ॥ ४॥

मान्दिराशिपतिमान्दिभावगाः स्वल्पबिदुरिपुनीचमूढगाः ।
पापखेटयुतभावसन्धिगा राशिसन्धिलवगास्त्वनिष्टकाः ॥ ५॥

दशापतिर्लग्नगतो यदि स्यात् त्रिंषड्दशैकादशगश्च लग्नात् ।
तसप्तवर्गोऽपिअथ तत् सुहृदा लग्ने शुभो वा शुभदा दशा स्यात् ॥ ६॥

दशादिनाथस्य सुहृद्गृहस्थतदुच्चगो वाऽथ् दशाधिनायात् ।
स्मरत्रिकोणोपचयोपगश्च ददति चन्द्रः खलु सत्फलानि ॥ ७॥

उक्तेषु राशीसू गतस्य विघोः स भावः स्याज्जन्मकालभवमूर्तिघनादिभावः ।
तत्तत्प्रवृद्धिकृदसौ केथितो नराणां तद्रावहानिकृदयेतरराशिसंस्थः ॥ ८॥

दशाप्रवेशे स्वगृहदिसंस्थे हिमद्युतौ यत्फलमुक्तमाइः ।
तद्वाच्यमिन्दुहि शुभाशुभाश्च्य फलम् मनोरूपतया ददाति ॥ ९॥

उत्पादितं हि द्युचरस्य पूर्व शुभादिकं कष्टफलं हि यत्तत् ।
तेनानुसरेण दआसु कल्प्यं शरीरभाजामशुभं शुभं वा ॥ १०॥

इष्टोत्कटत्वे हि शुभानि पुंसां फलान्यनिष्टान्यशुभोत्कटत्वे ।
साम्ये तु मिश्राणि फलानि नूनं सर्वत्र चैवं परिकल्पनीयम् ॥ ११॥

संज्ञाध्याये यस्य यद्द्रव्यमुक्तं कर्माजीवो यस्य यश्चोपदिष्टः ।
भावस्थानलोकयोगोद्भवं च तत्तत्सर्व तस्य योज्यं दशायाम् ॥ १२॥

शुभफलदशायं तादृगेवान्तरात्मा बहु जनयति पुंसां सौख्यमर्थागमं च ।
कर्यतफलविपाइकस्तर्कयेद्वर्तमानां परिणमति फलोक्तिः स्वप्रचिन्तास्ववीर्यैः ॥ १३॥

पाकस्वामिनी लग्नगे सुहृदि वा वर्गेऽस्य वा सौम्येऽपि वा
प्रारब्धा शुभदा दशा त्रिदशषड्लाभेषु वा पाकपे ।
मीत्रिचोपचयत्रिकोणमदने पाकेश्वरस्य स्थित-

चन्द्रः सत्फलषोधनाणी कुरुते पापानि चातोऽन्यथा ॥ १४॥

लग्नादिष्टगृहोपगः स्वभवने तुङ्गे सुहृद्भेऽथवा
पाकेशः शुभमित्रवीक्षणयुतस्तत्पाकभुक्तौ शुभम् ।
केन्द्रे वा यदि कोणगोऽतीशुभदा पापास्त्रीषष्ठायगा-
स्तुङ्गायोपचयेषु ये बलयुवआस्तेषां दशायां शुभं ॥ १५॥

अन्योन्यमिष्टप्रहयोर्दशायां भुक्तौ शुभं षड्बलशालिनोरतु ।
शत्रुप्रहौ दुर्बलशालिनौ चेत् पाकापहारे तु तयोरनर्थः ॥ १६॥

करोति यभावगतः स्वपाके तद्भावजन्यं त्वशुभं शुभं वा ।
शुभं शुभव्योमचरस्य दाये पापस्य दाये स्वशुभं वदन्ति ॥ १७॥

सम्यान्वितप्रहदशाऽतिशुभप्रदा स्यात् पापान्वितस्य विफलं परिपाककाले ।
मिश्रप्रहेण सहितस्य दशापहरे मिश्रं फलं भवति मिश्रबलान्वितस्य ॥ १८॥

यद्धातुखेटस्य दशापहारे तद्धातुवित्तायतिभाहुरार्यः ।
धातुक्षयं पापवियचरस्य पाकेऽभिवृद्धिं शुभदस्य धातोः ॥ १९॥

सपन्नखेटोपगतस्य पाके सपन्नवृद्धिं सकलार्थनाशम् ।
यत्कर्मकर्तृप्रहपाककाले तत्क्रमसिद्धि प्रवदन्ति सन्तः ॥ २०॥

यत्कार्यकारिद्युचरस्य दये तत्कर्यसिद्धिं प्रवदेन्नराणाम् ।
शुभग्रहोऽसौ यदि कर्यसिद्धिं पापस्तु तत्कार्यविनाशनेव ॥ २१॥

राज्यस्थानपराज्यकारकदशा राजप्रसादप्रदा
देवव्योमचरस्य पाकसमये तद्देवताराधनम् ।
धर्माधीशदशागते लति तपोधर्मादिसिधिं वदेत्
कर्मेशस्य दशापाकसमये यज्ञदिकर्मोत्सवम् ॥ २२॥

सत्त्वादिग्रहपाकभुक्तिसमये तत्तद्गुणो जायते
जन्मर्क्षादिनवर्क्षग्ग्रहदशा कुर्वीत भूतं फलम् ।
कर्मर्क्षादिनवर्क्षगस्य बलिनः पाके भविष्यत्फलं
चाधानादिगतस्य सर्वमफलं पाके फलं वा वदेत् ॥ २३॥

शीर्षोदयगतः खेटः पाकादौ फलदो भवेत् ।
पृष्ठोदयस्थः पाकान्ते चोभयोदयगः सदा ॥ २४॥

षष्ठेशस्य दशा विलापकरणी मृत्युविनाशप्रभो-
रस्तव्योमचरस्य बन्धुमरणं पाकेऽपहारेऽथवा ।
सम्पत्साधकमैत्रपाः परममैत्रक्षेमताराधिपा-
वेतेषामपहारभुक्तिसमये सम्पत्समृधिं वदेत् ॥ २५॥

त्रिमण्डलेष्वथैकस्मिन् पापस्तिष्ठति दुर्बलः ।
तद्दशायां मृतिं विड्यात् ससौम्यो यदि शोभनम् ॥ २६॥

राशिसन्धिगदाये तु शोकरोगादिपीडनम् ।
त्रिंशद्भागमनुक्रान्तदशा मृत्युफलप्रदा ॥ २७॥

नीचस्थितो जन्मनि यो ग्रहः स्यात् स चापि तद्युक्तखगो न शक्तः ।
दातुं शुभं राहुयुतस्त्वनिष्टं तत्क्षेत्रगस्तद्युतराशिपश्च ॥ २८॥

तत्तद्भावाधीश्वरस्याधिशत्रुर्यो वा खेटो बिन्दुशून्यर्क्षयुक्तः ।
तत्तत्पाके मूर्तिभावादिकानां नाशं ब्रूयादेवमाद्युर्मुनीन्द्राः ॥ २९॥

बाधास्थानपतद्युतग्रहदशा शोकादिरोगप्रदा
तत्केन्द्रस्थदशापहारसमये उःखं विदेशाटनम् ।
अन्योन्याष्टमषष्ठगद्युचरयोः पाकापहारे भयं
देशत्यागमनर्थमिष्टशुभयोः सर्वं विमिश्रं वदेत् ॥ ३०॥

पाके दीप्तस्य राजा भवति धनयशोदानविद्याविनोदी
स्वस्थस्याचारधर्मश्रवणबहुसुखारोग्यवित्तान्वितः स्यात् ।
राजप्रीतिं विभूतिं सुखमिह मुदितव्योमवासस्य दाये
शान्तस्यारोग्यसौख्यश्रियमवार्नपतिप्रीतिमुत्साहमेति ॥ ३१॥

पाके शक्तस्य विद्यानिवयधनतपःसिद्धिधर्मप्रवृत्ति-
श्चोराराातिक्षितीशैर्भयमनुजमृतिः पीडितस्य ग्रहस्य ।
दाये दीनस्य दैन्यं विकलखगदशा शोकरोगप्रदा स्यात्
चित्तक्लेशः खलस्य प्रतिदिनमरिभिर्भीतखेटस्य भीतिः ॥ ३२॥

विलग्नतारेन्दुभनामताराप्रश्नेन्दुनक्षत्रगणेषु मध्ये ।
बलाधिलर्क्षेशदशाक्रमेण फलं शुभं वाऽशुभमाहुरार्याः ॥ ३३॥

उतपन्ननक्षत्रविलग्नतो वा भूयात् क्रमेणैव दशाफलानि ।
दशावसानेष्वशुभं च सर्वे कुर्वन्ति सामान्यफलं नराणाम् ॥ ३४॥

जन्मर्क्षात्परतस्तु पञ्चमभवाऽथोत्पन्नसंज्ञा दशा
स्यादाधानदशाऽप्यथाष्टमभवात् क्षेमान्महाख्या दशा ।
आसां चैव दशावसानसमये मृत्युं वदेत्प्राणितां
दीर्घस्वल्पसमायुषां वधाविपत्प्रत्यग्-दशासु क्रमात् ॥ ३५॥

अथ निर्याणदशा ।

जातोऽह्नि चेदर्कसनिस्फुटैक्यतारादिनेर्याणदशा प्रकल्प्या ।
तारेशराहुस्फुटयोगतारापूर्वा दशारिष्टकरा रजन्याम् ॥ ३६॥

अथ गुलिकदशा

गुलिकस्थितनक्षत्रादशा तस्य प्रकल्पिता ।
तद्युक्तभवनांशेशौ सहकारी च मृत्युदाः ॥ ३७॥

अथ शूलदशा ।

दिनेशाविनशुक्रौ च राजारौ कारकाः स्मृताः ।
कारकस्य त्रिशूलर्क्षे यदा चरति या दशा ॥ ३८॥

तत्कारलस्थित्तगृहादिषु सर्वभेषु चक्रप्रमाणदलवत्सरसंयुतेषु ।
वीर्यान्वितेषु शुभदृष्टियुतेषु सौख्यं नीचारिपापयुतभेषु वदन्त्यनिष्टम् ॥ ३९॥

अथ महादशविशेषः ।

यत्तारांशगतः शशी तदधिपेनालोकितो वा युत-
स्तेषां चक्रदशा विशेषफलदा वक्षयामि तचक्रजम्
देहे पापयुते तु रोगमाधिकं जीवे तु जीवभ्रमं
दद्याद्यनयोः सहाबलयुतिर्मृत्युं दशायां नृणाम् ॥ ४०॥

अथान्तर्दशाविशेषफलम् ।
पापो विलग्नगृहगो यदि तद्दशायं पापापहतसमये बहुशोकरोगम् ।
वित्तक्षयं नृसपत्नभयं नराणं सौम्यस्य मिश्रमखिलं प्रवदन्ति सन्तः ॥ ४१॥

लग्नाधिपद्शाकाले मन्दभुक्तौ धनक्षयम् ।
इष्टबन्धुविरोधश्च भविश्यति न संशयः ॥ ४२॥

धनाधिपः पापखगो(पापस्वगो)यदि स्याच्छन्यारभोगीशदिनेष्वराणाम् ।

अन्तर्दशायां  धननाशमाहुः पापान्विते तद्भवने तथैव ॥ ४३॥

धनान्वितः पापखगस्तदीशः स्यात्तदशायां क्षितिपालकोपात् ।
मानार्थनाशं निगलं नराणां स्थानच्युतिं मित्रविरोधमेति ॥ ४४॥

पापग्रहे विक्रमभावनाथे पापवियच्चराणाम् ।
अन्तर्दशायामरिशत्रुचोरैर्दुःखं समायाति शुभान्विते वा ॥ ४५॥

दुश्चिक्यहृभावाधिपदायकाले मन्दारभोगिध्वजभानुभुक्तौ ।
नाशं वदेत्तत्र सहोदराणां भवेद्विशेषात्सहजैर्विरोधः ॥ ४६॥

क्षेत्राधिनाथस्य शुभेतरस्य पाके तु पापग्रहभुक्तिकाले ।
स्थानच्युतिं बन्हुजनैर्विरोधं कृष्यादिगोवित्तविनाशमाहुः ॥ ४७॥

पापापहारसमये सुतराशिपस्य पाके नृपालभयमिष्तसुतार्तिमाहुः ।
सौम्यापहारसमये सुतवित्तलाभमुर्विशबन्धुजनलालनमिष्टसिद्धिम् ॥ ४८॥

षष्ठेशपाकसमये तु शुभेतराणां भुक्तौ नृपानलभयं व्यसनं च रोगम् ।
पाके कलत्रगृहपस्य खलापहरे पत्नीविनाशमटनं च विदो वदन्ति ॥ ४९॥

रन्ध्रस्वामिदशागमे रिपुभयं पापापहरे नृणा-
भायुर्वित्तयशोविनाशमटनं स्थानच्युतिं वा वदेत् ।
पाके धर्मगृहाधिपस्य भरणं पित्रोरधर्मायतिं
भुक्तौ पापवियचरस्य निगलप्राप्तिं च वित्तक्षयम् ॥ ५०॥

कर्मेशस्य खलस्य पाकसमये भुक्तौ यदा पापीना-
मिष्टार्तिं पदविच्युतिं सुखयशोहानिं च वित्तक्षयम् ॥

मन्दारार्कफणिशभुक्तिसमये लाभेशदाये सुखं
कृष्यादिप्रविनायनं नृपभयं वित्तस्य नाशं विदुः ॥ ५१॥

व्ययेशदाये रविमन्दभौमभुक्तौ कलत्रात्मजबन्धुवैरम् ।
बलक्षयं मानधनक्षयं च फणीशभुक्तौ विषभीतिमाहुः ॥ ५२॥

अन्योन्यषष्ठाष्तमपाकभुक्तौ पदच्युतिं वा मरनं नराणाम् ।
एकस्थयोरन्तरदायकाले मृत्युं वदेद् दुर्बलशालिनोस्तु ॥ ५३॥

क्रूरग्रहदशाकले क्रूरस्यान्तर्दशागमे ।

मरणं तस्य जातस्य भविश्यति न संशयः ॥ ५४॥

क्रूरराशिगताः पापाः शत्रुखेटनिरीक्षिताः ।
शत्रुखेचरसंयुक्तास्तदशायां मृतिर्भवेत् ॥ ५५॥

दशाधिपस्य यः शत्रुस्तस्य भुक्त्यन्तरान्तरे ।
मृत्युकालो भवेन्नूनं पापखेटस्य नीश्चयः ॥ ५६॥

स्वोचादिजन्यमशुभस्य दशाप्रवेशे भावादिजं फलमशोभनपाकमध्ये ।
इष्टयुद्भवं सकलपापवियचराणां पाकावसानसभये फलमाहुरार्याः ॥ ५७॥

पाकस्यादौ भावजन्यं शुभानां तत्तद्राशिस्थानजं पाकमध्ये ।
दायस्यान्ते दृष्टसजातमेवं सर्वे तारापाकभेदं वदन्ति ॥ ५८॥

अथान्तर्दशाफलाणि ।

अथ तरणिदशायां चौर्यमुचाटनाद्यैर्धनमनलचतुष्पात्पीडनं नेत्रतापम् ।
उदरदशनरोगः पुत्रदारैर्वियोगो गुरुजनपितृनाशो भृत्यगोवित्तहानिः ॥ ५९॥

दशा दशाहता मासाश्चैकस्थानं विना परे ।
एकस्थानं त्रिगुणितं दिनान्यन्तर्दशाक्रमः ॥ ६०॥

अथ रविदाशायांअन्तर्दशाफलानि ।

द्विजभूपतिशास्त्राद्यैर्धनप्राप्तिं मनोरुजम् ।
विदेशवनसङ्चारं भानोरन्तर्गते स्वौ ॥ ६१॥

बन्धुमित्रजनैरर्थं प्रमादं मित्रसज्जनैः ।
पाण्डुरोगादिसन्तापं चन्द्रे भानुदशान्तरे ॥ ६२॥

रत्नकाङ्चनवित्ताप्तिं राजस्नेहं शुभावहम् ।
पैत्यरोगादिसङ्चारं कुजे भानुदशान्तरे ॥ ६३॥

अकाले मृत्युसन्तापं बन्धुगर्गारिपीडनम् ।
पदच्युतिं मनोदुःखं रवेरन्तर्गतेऽप्यहौ ॥ ६४॥

सर्वपूज्यं सुताद्वित्तं देवब्राह्मणपूजनम् ।
सत्कर्माचारसद्रोष्टी रवेरन्तर्गते गुरौ ॥ ६५॥

सर्वशत्रुत्वमालस्यं हीनवृत्तिं भनोरुजम् ।
राजचोरभयप्राप्तिं रवेरन्तर्गते शनौ ॥ ६६॥

बन्धुपीडां मनोदुःखं सन्नोस्साहं धनक्षयम् ।
किङ्चित्सुखमवानोति रवेरन्तर्गते बुधे ॥ ६७॥

कण्ठरोगं मनस्तापं नेत्ररोगमथापि वा ।
अकालमृत्युमाप्नोति रवेरन्तर्गते ध्वजे ॥ ६८॥

जले द्रव्याप्तिमायासं कुस्त्रीजननिषेवणम् ।
शुष्कसंवादमाप्नोति रवेरन्तर्गते भृगौ ॥ ६९॥

दशादौ दिननाथस्य पितृरोगं धनक्षयम् ।
सर्ववाधाधरं मध्ये दशान्ते सुखमाप्नुयात् ॥ ७०॥

स्वोच्चे नीचनवांशगस्य तरणेर्दयेऽपवादं भयं
पुत्रस्त्रीपितृवर्गबन्धुमरणं कृष्यादिवित्तक्षयम् ।
नीचे तुङ्गनवांशगस्य च रवेः पाके नृपालश्रुयं
सौख्यं याति दशावसानसमये वित्तक्षयं वा मृतिम् ॥ ७१॥

अथ चन्द्रदशाफलम् ।

हिमकिरणदशायां मन्त्रदिवद्विजाप्तिर्युवतिजनविभूतिः स्त्रीधनक्षेत्रसिद्धिः ।
कुसुमवसनभूषागनानाधनाढ्यो भवति बलविरोधे चार्थहा वातरोगी ॥ ७२॥

अथ चन्द्रदशायामन्तर्दशाफलानि ।

विद्यास्त्रीगीतवाद्येष्वभिरतिशमनं पटुवस्त्रादिसिद्धिं
सत्सङ्गं देहसौख्यं नृपसचिवचमूनायकैः पूज्यमानम्
सत्कीर्तिं तीर्थयात्रां वितरति हिमगुः पुत्रामित्रैः प्रियं च ।
क्षोणीगोवाजिलाभं बहुजनविभवं स्वे दशान्तर्विपाके ॥ ७३॥

रोगं विरोधबुद्धि च स्थाननाशं धनक्षयम् ।
मित्रभ्रातृवशात् क्लेशं चन्द्रस्यान्तर्गते कुजे ॥ ७४।

रिपुरोगभयात् क्लेशं बन्धुनाशं धनक्षयवम् ।
न किंचित्सुखमाप्नोति राहौ चन्द्रदशान्तरे ॥ ७५॥

यानादिविविधार्थाप्तिं वस्त्राभरणसम्पदः ।
यत्नात् कार्यमवाप्नोति जीवे चन्द्रदशान्तरे ॥ ७६॥

मातृपीडा मनोदुःखं वातपैत्त्यादिपीडनम् ।
स्तब्धवागरिसंवादं शनौ चन्द्रदशान्तरे ॥ ७७॥

मातृवर्गाद्धनप्राप्तिं विद्वज्जनसमाश्रयम् ।
वस्त्रभूषणसप्राप्तिं बुधे चन्द्रदशान्तरे ॥ ७८॥

स्त्रीरोगं बन्धुनाशं च कुक्षिरोगादिपीडनम् ।
द्रव्यनाशमवाप्नोति केतौ चन्द्रदशान्तरे ॥ ७९॥

स्त्रीधन कृषिपश्वादिजलवस्त्रागमं सुखम् ।
मातृरोगभवाप्नोति भृगौ चन्द्रदशान्तरे ॥ ८०॥

नृपप्रायकमैश्वर्यं व्याधिनाशं रिपुक्षयम् ।
सौख्यं शुभमवाप्नोति रवौ चन्द्रदशान्तरे ॥ ८१॥

आदौ भावफलं मध्ये राशिस्थानफलं विदुः ।
पाकावसानसमये चाङ्गजं दृष्तिजं फलम् ॥ ८२॥

अथ कुजदशाफलम् ।

पाके भूमिसुतस्य शस्त्रहुतभूवाहनाद्यैर्धनं
भैषज्यान्नपङ्चनैश्च विविधैः क्रौर्यैर्धनस्थानगमम् ।
पित्तासृग्ज्वरपीडनं तु सततं नीचाङ्गनासेवनं
विद्वेषं सुतदारबन्धुगुरुभिर्दुष्टान्नभोगं विदुः ॥ ८३॥

अथ कुजदशायामन्तर्दशाफलानि ।

उष्णाधिक्यं सुहृद्द्वेषं मातृपीडां नृपाद्भयम् ।
सर्वकार्यर्थनाशं च कुजे कुजदशान्तरे ॥ ८४॥

नृपचोरादिभीतिञ्च धनधान्या दनाशनम् ।
दुष्टकर्मादिसंसिद्धि राहौ कुजदशान्तरे ॥ ८५॥

द्विजमूलाद्धनपाप्तिं भूलाभं च निरामयम् ।

सम्पूजनंजयं सौख्यं गुरौ कुजदशान्तरे ॥ ८६॥

बहुदुःखाकरव्याधिमरिचोरनृपैर्भयम् ।
धनक्षयमवाप्नोति शनौ भौमदशान्तरे ॥ ८७॥

वैश्यवर्गाद्धनप्राप्तिं गृहगोधान्यसम्पदः ।
शत्रुबाधां मनक्लेशं बुधे कुजदशान्तरे ॥ ८८॥

कुक्षिरोगेण सन्तापं बन्धुसोदरपीडनम् ।
दुष्टमानषशत्रुत्वं केतौ कुजदशान्तरे ॥ ८९॥

कलत्रभूषणं वस्त्रं बन्धुवर्गाद्धनागमम् ।
स्त्रीजन्द्वेष्यतद्रोष्ठी शुक्रे बौमदशान्तरे ॥ ९०॥

अपवादं गुरुद्वेषं कलहं व्याधिपीडनम् ।
आत्मवर्गान्मनोदुःखं रवौ भौमदशान्तरे ॥ ९१॥

नामावित्तसुखं वस्त्रमुक्तामणिविभूषणम् ।
निद्रालस्यमथोद्वेगं चन्द्रे भौमदशान्तरे ॥ ९२॥

भूनन्दनस्य पाकादौ मानहानिर्धनक्षयः ।
मध्ये नृपाग्निचोरद्यैर्भीतिश्चान्ते तथ भवेत् ॥ ९३॥

उच्चस्थितस्य धरणीतनयस्य पाके नीचांशगस्य मरणं सुतसोदराणाम् ।
नीचे तु तुङ्गभवनांशगतस्य दाये कृष्यादिभिधनधान्यसुखं वदन्ति ॥ ९४॥

राहुदशाफलम् ।

सौख्यादिवित्तस्थितिनाशनं च कलत्रपुत्रादिवियोगदुःखम् ।
अतीव रोगं परदेशवासं विवादबुद्धि कुरुते फणिशः ॥ ९५॥

अथ राहुदशायामन्तर्दशाफलानि ।

जायारोगं विवादं च बुद्धिनाशं धनक्षयम् ।
दूरदेशाटनं दुःखं राहौ राहुदशान्तरे ॥ ९६॥

व्याधिशत्रुविनाशं च राजप्रीतिं धनागमम् ।
पुत्रलाभं तथोत्साहं गुरौ राहुदशान्तरे ॥ ९७॥

वातपित्तकृतं रोगं बन्धुमित्रादिपीडनम् ।
दूरदेशनिवासं च शनौ राहुदशान्तरे ॥ ९८॥

मित्रबन्धुकलत्रादिसंयोगं च धनागमम् ।
राजप्रीतिभवाप्नोति बुधे राहुदशान्तरे ॥ ९९॥

चौर्यं च मानहानि च पुत्रनाशं पशुक्षयम् ।
सर्वोपद्रवभाप्नोति केतौ राहुदशान्तरे ॥ १००॥

विदेशाद्वाहनप्राप्निश्छात्रचामरसम्पदः ।
रोगारिबन्धुभीतिः स्यात् शुक्रे राहुदशान्तरे ॥ १०१॥

दानधर्मरतिः प्रीतिः सर्वोपद्रवनाशनम् ।
संसाररोगसङ्चारो रवौ राहुदशान्तरे ॥ १०२॥

भोगसम्पद्भवेन्नित्यं सस्यवृद्धिधर्नागमः ।
स्वबन्धुजनसंवादश्चन्द्रे राहुदशान्तरे ॥ १०३॥

सर्वोपद्रवसंयोगः सर्वकार्येषु मूढता ।
वित्तविस्मृतिदोषः स्यात् कुजे राहुदशान्तरे ॥ १०४॥

कुलीरगोमेषयुतस्य राहोर्दशाविपाके धनधान्यलाभम् ।
विद्याविनोदं नृपमाननं च कलत्रनृत्यादिसुखं वदन्ति ॥ १०५॥

पाथोनमीनाश्वयुतस्य राहिर्दशाविपके सुतदारलाभम् ।
देशाधिपत्यं नरवाहनं च दशावसाने सकलं विनाशम् ॥ १०६॥

मृगपतिवृषकन्याकर्कटस्थस्य राहोर्भवति च परिपाके राजतुल्यो नृपो वा ।
गजतुरगचमूपः सर्वजीवोपकारी बहुधनसुखशीलः पुत्रदारानुरक्तः ॥ १०७॥

दशादौ दुःखमाप्नोति दशाम्ध्ये महत्सुखम् ।
द्शान्ते फणिनाथस्य पितृनाशं पदच्युतिम् ॥ १०८॥

अथ गुरुदशाफलम् ।

स्थानप्राप्तिं वित्तयानाम्बराप्तिं राजस्नेहं चित्तशुद्धि विभूक्तिम् ।
ज्ञानाचारं पुत्रदारादिलाभं देवाचार्यः स्वे विपाके करोति ॥ १०९॥

अथ गुरुदशायामन्तर्दशाफलानि ।

नृपप्रीति तथोत्साहं सर्वकार्यार्थसाधनम् ।
विद्याविज्ञानमाप्नोति गुरौ गुरुदशान्तरे ॥ ११०॥

द्वेषबुद्धिं मनस्तापं पुत्रमूलाद्धनव्ययम् ।
कर्मनाशभवाप्नोति शनौ जीवदशान्तरे ॥ १११॥

वैश्यवर्गेण वित्ताप्तिं राजस्नेहं सुखावहम् ।
सत्कर्माचरसिद्धिं च बुधे जीवदशान्तरे ॥ ११२॥

मुक्ताप्रवालभूषाप्तिस्तीर्थयात्रा धनायतिः ।
गुरुभूपवशादाप्तिः केतौ जीवदशान्तरे ॥ ११३॥

वाहनादिधनप्राप्तिः छत्रचामरवैभवम् ।
स्त्रीपीडा जनविद्वेषो भृगौ जीवदशान्तरे ॥ ११४॥

शत्रुनाशं जयं सौख्यं चित्तोत्साहं धनागमम् ।
राजप्रसादमारोग्यं रवौ जीवदशान्तरे ॥ ११५॥

स्त्रीकृतोत्साहमैश्वर्य राजप्रीतिः सुखावहम् ।
दिव्यवस्त्रविभूषाप्तिं चन्द्रे जीवदशान्तरे ॥ ११६॥

कर्मनाशं च सङ्चारं ज्वरतापं महद्भयम् ।
वननाशं निरुत्साहं कुजे जीवदशान्तरे ॥ ११७॥

सर्वक्लेशभयं रोगं सर्वोपद्रवकारणम् ।
धनच्छेदभवाप्नोति राहौ जीवदशान्तरे ॥ ११८॥

नीचांशोपगतः स्वतुङ्गभवने जीवस्य पाके भयं
चोराराातिनृपैः कलत्रतनयद्वेषं करोत्यश्रियम् ।
नीचे तुङ्गनवांशको यदि महाराजप्रसादं सुखं
विद्याबुद्धियशोधनादिविभवं देशाधिपत्यं तु वा ॥ ११९॥

अथ शनिदशाफलम् ।

शनेर्दशायामजगर्दभोष्ट्रवृद्धाङ्गनापक्षिकुधान्यलाभम् ।

क्षेणीपुरग्रामजनाधिकाराद्धनं वदेन्निचकुलाधिपत्यम् ॥ १२०॥

अथ शनेर्दशायामन्तर्दशाफलानि ।

क्लेशादिभिर्व्याधिनिपीडनं च मार्सर्यमानैर्बहुशोकतापम् ।
भूपालचोरैर्धनधान्यनाशं करोति मन्दः स्वदशापहारे ॥ १२१॥

रवितनयदशायां स्वापहारे विरोधं नरपति जनकिपं प्रेष्यवृद्धाङ्गनाप्तिम् ।
पशुगणविषभीतिं पुत्रदारादिपीडां ज्वरपवनकफार्तिं शूलरोगं वदन्ति ॥ १२२॥

सुखवित्तयशोवृद्धिं सत्कर्माचारसम्पदः ।
कृषिवाणिज्यमाप्नोति बुधे मन्ददशान्तरे ॥ १२३॥

वातपित्तकृतं रोगं कलहं नीचदुर्जनैः ।
दुःस्वप्नभयमाप्नोति केतौ मन्दद्शान्तरे ॥ १२४॥

बन्धुस्नेहं जनप्रीतिं जायावित्तधनायतिम् ।
कृष्यादिसुखमाप्नोति भृगौ मन्ददशान्तरे ॥ १२५॥

पुत्रदारविनाशं च् नृपचोरादिपीडनम् ।
मनोभयमवाप्नोति भानौ मन्ददशान्तरे ॥ १२६॥

गुरुस्त्रीमरणं दुःखं बन्धुद्वेषं धनागमम् ।
वातरोगमवाप्नोति चन्द्रे मन्ददशान्तरे ॥ १२७॥

स्थानच्युतिं महारोगं नानाविधमनोभयम् ।
सहोदरसुहृत्पीडां भौमे मन्दद्शान्तरे ॥ १२८॥

स्वाङ्गरोगसन्तापं चोरारिनृपपीडनम् ।
धनच्छेदमवाप्नोति राहौ मन्ददशान्तरे ॥ १२९॥

देवभूदेवभक्तिं च राजप्रीतिं महत्सुखम् ।
स्थानलाभमवाप्नोति गुरौ मन्ददशान्तरे ॥ १३०॥

स्वोच्चे नीचनवांशगो रविसुतः कुर्वीत सौख्यं फलं
पाकादौ तु दशावसानसमये कष्टं फलं प्राणिनाम् ।
तुङ्गांशोपगते स्वनीचभवने पाकावसाने सुखं
दायादौ रिपुचोरभीतिमधिकं दुःखं विदेशाटनम् ॥ १३१॥

अथ बुधदशाफलम् ।

स्वकीयदाये गुरुबन्धुमित्रैरर्थार्जनं कीर्तिसुखं करोति ।
दैत्यं च सत्कर्महिरण्यपुण्यैर्धनायतिं वातरुजं कुमारः ॥ १३२॥

अथ बुधदशायामन्तर्दशाफलानि ।

विचित्रगृहवित्ताप्तिं राजप्रीतिं महत्सुखम् ।
सर्वकार्यार्थसंसिद्धिं बुद्धे सौम्यदशान्तरे ॥ १३३॥

बन्धुपीडां मनस्तापं सौख्यहानिमरेर्भयम् ।
कार्यनाशभवाप्नोति केतौ सौम्यदशान्तरे ॥ १३४॥

गुरुदेवाग्निविप्रेषु दानं धर्मप्रियं तपः ।
धनवस्त्रविभूषाप्तिं शुक्रे सौम्यदशान्तरे ॥ १३५॥

वस्त्रभूषणवित्ताप्तिं राजप्रीतिं महत्सुखम् ।
धर्मश्रवणमाप्नोति रवौ बुधदशान्तरे ॥ १३६॥

रोगारातिजनद्वेषं सर्वकार्यार्थनाशनम् ।
चतुष्पाद्भयमाप्नोति चन्द्रे सौम्यदशान्तरे ॥ १३७॥

रोगारेभयनाशं च पुण्यकर्मफलं यशः ।
राजप्रीतिमवाप्नोति कुजे सौम्यदशान्तरे ॥ १३८॥

मित्रबन्धुधनप्राप्नोति सुखविद्याविभुषणम् ।
राजप्रीतिमवाप्नोति राहौ सौम्यदशान्तरे ॥ १३९॥

इष्टबन्धुगुरुद्वेषं धनलाभं सुतायतिम् ।
रोगादिभयमाप्नोति गुरौ सुअम्यदशान्तरे ॥ १४०॥

धर्मसत्कर्मवित्ताप्तिं सुखमल्पजनाधिपैः
कृष्यादिनाशमाप्नोति शनौ सौम्यदशान्तरे ॥ १४१॥

उच्चराशिगतः सौम्यो नीचांशकसमन्वितः ।
करोति कर्मवैकल्यं निजदाये च वर्धनम् ॥ १४२॥

नीचस्थानगतश्चान्द्रिस्तुङ्गांशकसमन्वितः ।
पाकादौ विफलं सर्वं शुभमन्ते प्रयच्छति ॥ १४३॥

अथ केतुदशाफलम् ।

दीनो नरे भवति बुद्धिविवेकनष्टो
नानाऽमयाकुलविवर्ज्धितदेहतापः ।
पापादिवृद्धिरतिकष्टचरित्रयुक्तः
किङ्चित्सुखी च शिखिनः परिपाककाले ॥ १४४॥

अथ केतुदशायामन्तर्दशाफलानि ।

कलत्रपुत्रमरणं सुखवित्तविनाशनम् ।
रिपुभीतिमबाप्नोति केतौ केतुदशान्तरे ॥ १४५॥

स्त्रीपुत्ररोगकलहं बन्धुमित्रादिनाशनम् ।
स्वरातिसारमाप्नोति शुक्रे केतुदशान्तरे ॥ १४६॥

मनोभङ्गं शरीरर्ति विदेशगमनं भयम् ।
सर्वकार्यविरोधं च रवौ केतुदशान्तरे ॥ १४७॥

दारपुत्रजनालस्यं धानधान्यविनाशनम् ।
मन्स्तापमवाप्नोति चन्द्रे केतुदशान्तरे ॥ १४८॥

पुत्रदारानुजद्वेषं रोगारिनृपपीडनम् ।
बन्धुनाशमवाप्नोति कुजे केतुदशान्तरे ॥ १४९॥

राजचोरभयं दुःखं सर्वकार्यविनाशनम् ।
दुष्टमानवसंवादं राहौ केतुदशान्तरे ॥ १५०॥

देवद्विजगुरुप्रीतिं राजस्नेहं निराम्यम् ।
भूपुत्रलाभमाप्नोति गुरौ केतुदशान्तरे ॥ १५१॥

मनोभयं मनस्तापं स्वबन्धुजनविग्रहम् ।
देशत्यागमवाप्नोति शनौ केतुदशान्तरे ॥ १५२॥

बन्धुमित्रादिसंयोगं पुत्रदारधनागमम् ।
विद्यासुखमवाप्नोति बुधे केतुदशान्तरे ॥ १५३॥

शुभग्रहयुतः केतुः स्वदशायां सुखप्रदः ।
यदि शोभनसन्दृष्तः करोति विपुलं धनम् ॥ १५४॥

सपापः कुरुते केतुः स्वपाके दुष्टमानवैः ।
भीतिं कृतिमरोगाध्यैर्व्यसनं धननाशनम् ॥ १५५॥

दशादौ गुरुबन्ध्वार्ति दशामध्ये धनायतिम् ।
दशान्ते सुखमाप्नोति केतोर्दयफलं त्रिधा ॥ १५६॥

अथ शुक्रदशाफलम् ।

स्त्रीपुत्रवित्ताप्तिमतीव सौख्यं युगन्धमाल्याम्बरभूषणाप्तिम् ।
यानादिभाग्यं नरपालतुल्यं यशः स्वपाके भृगुजः करोति ॥ १५७॥

अथ शुक्रदशायामन्तर्दशाफलानि ।

शव्यास्त्रीधनवस्त्राप्तिं धर्मादिसुखसम्पदः ।
रिपुनाशं यशोलाभं शुक्रे शुक्रदशान्तरे ॥ १५८॥

मुर्धोदराक्षिरागं च कृषिगोवित्तनाशनम् ।
नृपक्रोधमवाप्नोति रवौ शुक्रदशान्तरे ॥ १५९॥

शीर्षोष्णरोगसन्तापं कामादिरिपुपीडनम् ।
किङ्चिर् सुखमवाप्नोति चन्द्रे शुक्रदशान्तरे ॥ १६०॥

पित्तासृगक्षिरोगं च चित्तोत्साहं धनागमम् ।
दारमूलाभमाप्नोति कुजे शुक्रदशान्तरे ॥ १६१॥

नीलवस्तुधनप्राप्नोति बन्धुद्वेषं सुहृद्भयम् ।
अग्निबाधामवाप्नोति रहौ शुक्रदशान्तरे ॥ १६२॥

धनवस्त्रविभूषाप्तिं धर्मचारं सुखावहम् ।
स्त्रीसुतार्ति च वैषम्य गुरौ शुक्रदशान्तरे ॥ १६३॥

वृद्धस्त्रीजनसम्भोगं गृहक्षेत्रधनागमम् ।
शत्रुनाशमवाप्नोति मन्दे शुक्रदशान्तरे ॥ १६४॥

सुतमित्रसुखार्थाप्ति नृपप्रीतिं महत्सुखम् ।
सुभमारेज्यमाप्नोति बुधे शुक्रदशान्तरे ॥ १६५॥

कलहं बन्धुनाशं च शत्रुपीडां मनोभयम् ।
धनच्छेदमवाप्नोति केतौ शुक्रदशान्तरे ॥ १६६॥

उच्चराशिं गतः शुक्रो नीचांशकसमन्वितः ।
स्वपाके धन्ननाशं च कुर्वीत पदविच्युतिम् ॥ १६७॥

भार्गवो नीचराशिस्थः स्वोच्चांशकसमन्वितः ।
स्वदाये कृषिवाणिज्यं धनलाभं प्रयच्छति ॥ १६८॥

दशाफले विशेषता ।

सम्यग्बलिनः स्वतुङ्गभागे सम्पूर्णा बलवर्जितस्य रिक्ता ।
नीचाम्शगतस्य शत्रुभगो ज्ञेयाऽनिष्टफला दशा प्रसूतौ ॥ १६९॥

तत्तद्भावार्थलामेशदशास्वन्तर्दशासु च ।
तत्तद्भावविनाशः स्यात् तद्युतेइतकारकैः ॥ १७०॥

त्रिकोणधनलाभस्था बलिनो यदि शोभनाः ।
स्वदशान्तर्दशाकाले कुर्वन्ति विपुल्कं सुखम् ॥ १७१॥

अस्टादशाध्यायिनि सर्वहोरासमुद्धृते जातकपरिजाते ।
राशिस्वरूपादि दशाफलान्तं प्रोक्तं मया भानुमुखप्रसादात् ॥ १७२॥

इति श्रीनव्ग्रहकृपया वैद्यनाथविरचिते जातकपारिजातेऽष्टादशोऽध्यायः ॥ १८॥

अथ ग्रन्थोपसंहारः ।

शाखाभिरष्टादशसंख्यकाभिरध्यायरूपाभिरतिप्रकाशः ।
ज्योतिर्मयः सर्वफलप्रधानः सङ्किर्तितो जातकपारिजातः ॥ १॥

उक्तं राशिगुणालयं ग्रहगतिस्थानस्वभावाकृति-
राधानादिसमस्तजीवजननं बालाद्यनिष्टाकरम् ।
आयुर्ज्जातकभङ्गयोगजविधिः श्रीराजयोगादिजो

द्विव्यादिग्रहयोगजः शुभकरि मान्द्यब्दजं च क्रमात् ॥ २॥

पश्चादष्टकवर्गबिन्दुगणितं होराधनस्थानजं
दुश्चिक्यावनिभावजं सुतरिपुस्थानप्रयुक्तं फलम् ।
कन्दर्पाष्टमधर्मराशिजनितं व्यापारलाभान्त्यजं
नारीजातकलक्षणं निगदितं चक्रं दशान्तर्दशा ॥ ३॥

श्रीविद्याधिकवेङ्कटाद्रितनयः श्रीवैद्यनाथः सुधी-
रादित्यादिसमस्तखेटकृपया विद्वज्जनप्रीतये ।
होरासिन्धुसमुद्धृतामृतमयीमष्टादशाव्यायिनी
चक्रे जातकपारिजातसरणिं गीतोत्सुकश्लोकिनीम् ॥ ४॥

इति जातकपारिजातः समाप्तः ।
समाप्तोऽयं ग्रन्थः ।